# सूत्रयितुश्चरितं।

न्यायव्याकरणाद्यखिलशास्त्राम्भोधिमथननिस्सारितसमाधिशतकजैनेंद्रप्रभृत्यद्भुतग्रंथरत्न सक्षमुपाप्राप्त यश्खर्वितदुर्वादिनागनिनद सततप्रभुतप श्रीसमालिंगितवदनसदनोऽन्वर्थाख्यो विभु पूज्यपादो भूषयाचक्रे खाव तारमाहात्म्येन शकाब्दचतु शतके कार्णाटकदेशस्थकोलंगलाभिध नगरं। वतते स जनकोऽस्य जात्या विप्रो नाम्ना च माधवभट्टो माता च देवीव श्रीदेवी। यदा चाय प्रभुर्निविण्य समाजग्राह संसारातकरीं जैनीं दीक्षा, ययौ तदा गुरुदत्तया देवनंद्याख्यया ख्यातिं जगतीतले। तत् प्रमाणीकुरुतेऽस्ते निम्नस्थोऽयं श्लोक।

**यो देवनंदिप्रथमाभिधानो बुद्ध्या महत्या च जिनेंद्रबुद्धिः।**
**स पूज्यपादोऽजनि देवताभिर्यत्पूजितं पादयुगं तदीयं॥**

प्रभोरस्य मतिगतिप्राचुर्यप्रभावाज्जिनेंद्रबुद्धिर्देवसंदोहप्रपूजितपादयुगलत्वात्पूज्यपाद इति चाख्ये प्रसिद्धि जग्म तुर्विद्वत्समाजे। पर मौलिकी तु पूर्वोक्तैव। सप्रतीयते तत् जैनेंद्रमहाव्याकरणस्य मंगलाचरणोच्चारिताद्श्लोकरूपेण। तथाहि— **लक्ष्मीरात्यंतिकी यस्य निरवद्यावभासते।**
**देवनंदितपूजेशे नमस्तस्मै स्वयंभुवे॥**

प्राक्प्रोल्लिखिताभिधायमलस्य ख्यातावक्तरति श्रुतिदेश मितमिताश्चाख्यायिका। समजनि स्वामिनोऽस्य महत्यारेका कदाचिच्चिन्तितघातिकर्मचतुष्टयत्वान्निखिलावबोधकतामधिगतस्य निर्मूलितारेकस्य जिनस्य साधितसर्व सत्त्वशत्वे सिद्धांते। तां दूरीकर्तुकामो निष्कामोऽय महात्मा सततसमस्तावबोधकभास्करभानुविघटितासद्ध्वानस्तोमे **विदेहाख्ये** क्षेत्रे गगनेन गंतु मतिं विदधे। जातश्च तत्र सहस्य सार्वसर्वज्ञपादपद्म समुन्मूलितसंदेहसंदोह। विद्वत्ततिना तत एव समाम्न्यायि **जिनेंद्रबुद्धिरि**ति नाम्ना। तत्कृतव्याकरणग्रंथश्च **शब्दार्ण**वेत्यपरनामसद्भावेऽपि **जैनेंद्रे**त्याख्यया। वीतरागस्यास्य चरणकमलस्पर्शप्रभाववशीभूत कालायस कल्याण कल्पते स्मातोऽधिगतवान् द्वितीया पूज्यपादेति समाख्यामय विभु। श्रूयते चेदमपि यावद्देहावसानावर्तितस्य शरीरशोषण सुघोर तपस्तप्यमानस्यास्य विभो सततनीरसभोजनखादनात् क्षुत्तृषाद्यनेकविधपरीषहसहनाच्च नेत्रद्वंद्व स्वकार्यकरणसामर्थ्यराहित्य गतं। कदाचित्समियायाय **वनवास**देशीयराजावासभूमिर्यं**कापुर**स्थ सुप्रसिद्धमाहात्म्य श्री**शांतिनाथ**जिनभवन। तत्र भगवद्भक्तिप्रवाहपरिप्लुतस्तथा स्तोतुमारभत यनास्याशु सकलसत्स्वरूपपदार्थदर्शनप्रवण नेत्रद्वंद्वमजायत। ततश्च समुद्भूतसमस्तदेशपर्यटनशक्ति कृतधर्मोपदेशकरणभक्ति सचचाराखिलभवनितल समुद्भासयन् जैनीं सत्स्वरूपपदार्थपंक्तिं, विधूनयन् नानाजनजनितासज्ज्ञानाधकारं येन शतश सहस्रशश्चास मार्गगामिनो मानवा सन्मार्गमुररीकृत्य प्रतिपेदिरे कृतकृत्यता। समुन्मूलिताराातिवर्गो निष्कंटकिताधिराज्यो **गंग**कुलतिलकायमानो **दुर्विनीत**काभिधो राजाधिगम्य राजपीठ शशासेशवीय ४७८ तमसंवत्सरात् ५१३ तमाब्दपर्यंत धरामिमा, स्वीचकार सोऽपि दुर्विनीतकोऽस्य शिक्षया सुविनीतता।

## रचितग्रंथाः।

यदय प्रभाति स्म न्यायव्याकरणकाव्यवैद्यकाध्यात्माद्यखिलविषयससूचकानेकान् ग्रंथान् समनुमीयतेऽतोऽस्यासीदखिलतंत्रस्वतंत्रता। समुपश्लोकित च केनापि—

**जैनेंद्रं निजशब्दभागमतुलं सर्वार्थसिद्धिः परा**
**सिद्धांते निपुणत्वमुद्धकविता जैनाभिषेकः स्वक।**
**छंदः सूक्ष्मधियं समाधिशतकं स्वास्थ्य तदीयं विदा-**
**माख्यातीह स पूज्यपादमुनिप पूज्यो मुनीनां गणैः॥**

प्रसिद्धिमनल्पामावहति तद् ग्रथितग्रंथेषु जैनेंद्रव्याकरणसर्वार्थसिद्धि (तत्त्वार्थसूत्रटीका) जैनाभिषेक-समाधिशतक-इष्टोपदेशा। तर्कयंति च केचिद् बौद्धसन्यासि**जिनेंद्रबुद्धि**कृतपाणिनीयसूत्र**काशिका**विवृतेरपि निर्मातृत्वमस्मिन् परं तन्नामसाम्याद् भ्रांतिमतरा नास्त्य यद्। न हि दृश्यते सति स्वनिर्मितव्याकरणग्रंथे तद्विवृतिं विहायान्यव्याकरणविवृतिकरणेन तच्चिकीर्षापूरण। को धीमान् विद्यमाने स्वद्रव्येऽन्यस्मादृणमावहेत्।

## जैनेंद्रव्याकरणं।

मोदयतींद्रचंद्राद्यष्टव्याकरणान्यतम शब्दार्णवापराभिध व्याकरणग्रंथमिद स्वसर्वांगपूर्णत्वेन सर्वेषामेव संस्कृत साहित्यज्ञातॄणां मनांसि। न हीदमुपलब्धान्यव्याकरणग्रंथसदृश अल्पितसूत्रसूत्रितमिष्टिवार्तिकत्रुटिकादिसंसा

धितरार्य। विस्मयते वीक्ष्यास्य रचनासौगम्यं वैयाकरणप्रधानाभीष्टमूनसूत्रगणलाघवं च। वर्तते च तत एवाधोलिखिता ख्यातिः —

प्रमाणमकलंकस्य पूज्यपादस्य लक्षणं।
धनंजयकवेः काव्यं रत्नत्रयमकंटकं॥

## संस्करणभेदः।

सलभ्यते भारतवर्षायोत्तरदक्षिणप्रान्तयोर्भिन्नभिन्नं संस्करणद्वयं। सति च तत्रोत्तरीयसंस्करणे पाणिनीयसूत्रानुसारि खण्डितावयवं सूत्रं वार्त्तिकेष्टिप्रभृतयश्च। परं ग्रंथकर्तुर्नाम्ने मंगलाचरणमात्रं सूत्रमेवमन्यानेकसूत्राणि चोभयोः समान्येव। सपद्यतेऽतो महान् संदेहो यत्कतरन्निर्मितमस्मद्भक्तिभाजनपूज्यपादपूज्यपादेन कतरद्वान्येन। नास्ति किंचित्प्रमाणं पूर्वाचार्यनिर्दिष्टमस्मत्समीपे येन शक्नुयाम सरलतया निर्णेतुं। यद्यपि विवादास्पदमेतत्तथापि तत्संस्करणयुगलनिरीक्षणतया पार्यतेऽवबोद्धुं। निरणायि स्वाल्पशेमुषीशक्तिवशवदैरस्माभिर्वास्य तेष्वपि संस्करणे यद्दाक्षिणात्यमेव गरीयस्तन्निर्मितं च। निर्णायकनिमित्तानि निम्ननिबद्धानि।

प्रथमं—साम्प्रतिकधूमशकटमुद्रणालयप्रभृतिसौगम्याभावेन दाक्षिणात्योऽयमाचार्यः सम्भवतया निर्माय पूर्वं प्रचारयितुं स्वग्रंथानासीत्तत्रैव स्वजन्मभूमौ विभुः पश्चाच्चोत्तरभारते। मन्यामहेऽतो तज्जननमद्यासुपलभ्यमानमेव व्याकरणं तत्कृतं।

द्वितीयं पुष्णाति सम्प्राप्तटीकाग्रथाश्चास्मन्मतमेव। यावत्यश्चोपलब्धा अधुनापर्यंतं टीकास्ता दृश्यते दाक्षिणात्यसंस्करणं समाश्रित्यैवोपजीव्यमाना विहायैका श्रीमदभयनन्दिविरचिता महावृत्तिं। वर्तते सा चोत्तरीयसंस्करणस्य। ये च सूत्रपाठप्रभृतिपंचपाठाः समुपलब्धास्तेऽपि दक्षिणसंस्करणस्यैव। आचार्यप्रवरश्रीगुणनंदिविरचितायां जैनेंद्रप्रक्रियाया सदृश्यते स्थानेषु बहुषु समुल्लेखोऽधस्तनप्रकारकः।

नमः श्रीपूज्यपादाय लक्षणं यदुपक्रमं।
यदेवात्र तदन्यत्र यन्नात्रास्ति न तत् क्वचित्॥

तृतीयं—सर्वेतरभिन्नता। ज्ञापितानि चोत्तरीयसंस्करणे परस्मैपदात्मनेपदोभयपदान्युदात्तानुदात्तस्वरितस्वरभेदचिन्हैः। न हि तद्वदध्यायिनाऽनरा येषामपि सुज्ञानकरं ज्ञापनं। नास्माभिस्तेषां स्वरभावाभावमुररीक्रियते परं प्रतिभात्यस्मिन् सर्वोपयोगिनि व्याकरणे बहुरभिप्रायलिढ्यभावः एतादृशेन यत्नसाध्येन संकेतेन। सद्बुद्धिमुपगच्छामो वयं विशेषेण दक्षिणसंस्करणं न हि तत्रोपरिलिखितसंकेताश्रयणं। परं समाश्रिता विश्वहितगामिनाऽपरैवाभिज्ञापनसरणिः। यया च स्थूलबुद्धयोऽप्यनायासपरिश्रमिणोऽपि तज्ज्ञानसमर्था भवेयुः। सति चानुबंधका धातुष्वात्मनेपदपरस्मैपदोभयसूचकाः। तथाहि—वर्तते येषु ऐकारोऽथवा ङकारोऽनुबंधः सति तथात्मनेपदिनः। येषु ञकारस्तेषुभयपदिनो येषु चाभावस्तयाणामपि सति ते परस्मैपदिनः। यथा—एधै-वृद्धौ, स्मिङ्-ईषद्धसने, वर्पञ्-वपने, भू-सत्तायामादयः।

चतुर्थं—सर्वांगनिर्दोषव्याकरणता। तदेव निर्दोषं सर्वांगपूर्णं च व्याकरणशास्त्रं यत्सारगर्भितनिखिलार्थप्रतिपादकसूत्रसूत्रितं, समाश्रितभाषायास्त्वावबोधकं। परमेतल्लक्षणाभावोऽस्त्युत्तरसंस्करणे। नहि तत्राखिलानिसूत्राणि निबद्धास्तत्स्थाने सूरिसूर्याऽभयनन्दिपादेन वार्तिकेष्टिप्रभृतयः। संसूच्यते तेन सूत्रकर्तुःर्हीनलाघवं तद्विषयाज्ञानाप्रतिपत्तिकारणाभ्यामेव वार्तिकादिरचनाया सम्भवात्। न हि वार्तिकवेदितविषयस्याप्रतिपादितत्वं तत्कालप्रथितग्रंथेषु तद्दर्शनात् स्वयमाचार्यपूज्यपादैरेवोदाहृतत्वाच्च। समुदाहृतं तत्त्वार्थसूत्रटीकायां सर्वार्थसिद्धौ "प्रमाणनयैरधिगमः" इति सूत्रव्याख्यावेलायां "नयशब्दस्याल्पान्तरत्वात्पूर्वनिपातः प्राप्नोति। नैष दोषः। अभ्यर्हितत्वात् प्रमाणस्य तत्पूर्वनिपातः"। नास्त्येतद् विषयप्रतिपादकं किंचित्सूत्रं महावृत्तौ परं 'अभ्यर्हितं पूर्वं निपतति' इति वार्तिकमभयनन्दिभिः। परं दाक्षिणात्ये संस्करणे दृश्यते 'अर्च्यं ।१।३।११५।' इति सूत्रं। एवमेवान्येषु बहुष्वपि स्थलेषु तद्दर्शनाद्याथातथ्यकारणसंघटनं समुपयुज्यते। तदवध्रियतेऽस्माभिर्दाक्षिणात्यमुत्तरीयेभ्यः।

पंचमं—उत्तरीयसंस्करणे प्रत्याहारसूत्राणुपलब्धिः। अक्षममेवैतावद्व्याकरणसूत्ररचयितुः स्वल्पप्रत्याहाररचनायामवकाशस्तथान्याचार्यैर्व्रजितैः सकार्यसाधनं। परं सदृश्यते निष्यानि तानि दाक्षिणात्यसंस्करणे।

इति समुपस्थाप्य विवेचनार्थं स्वमतं विरम्यतेऽस्माभिः।

कलकत्ता।
२६–९–१६।

श्रीश्रीलालः।

# जैनेन्द्रव्याकरणसूत्राणामकारादिक्रमणिका ।

घ

म

## ष



## स

## ह्

इति जैनेंद्रव्याकरणस्याकारादिक्रमणिका समाप्ता ।





सनातनजैनग्रंथमाला ।
६

आचार्यवर्यश्रीसोमदेवसूरिविरचिता

# शब्दार्णवचंद्रिका ।

( जैनेंद्रलघुवृत्तिः )

---

श्रीपूज्यपादममलं गुणनंदिदेवं सोमामरव्रतिपपूजितपादयुग्मं ।
सिद्धं समुन्नतपदं वृषभं जिनेंद्रं, सच्छब्दलक्षणमहं विनमामि वीरं ॥ १ ॥
श्रीमूलसंघजलजप्रतिबोधभानोर्मेघेंदुदीक्षितभुजंगसुधाकरस्य ।
राद्धांततोयनिधिवृद्धिकरस्य वृत्तिं, रेभे हरींदुयतये वरदीक्षिताय ॥ २ ॥
लक्ष्मीरात्यंतिकी यस्य निरवद्यावभासते ।
देवनंदितपूजेशे नमस्तस्मै स्वयंभुवे ॥ १ ॥

---

**सिद्धिरनेकांतात् ॥ १ ॥** सिद्धिः शब्दानां निष्पत्तिर्ज्ञप्तिर्वा भवत्यनेकांतात्, अस्तित्वनास्तित्वनित्यत्वानित्यत्वविशेषणविशेष्याद्यात्मकत्वात् दृष्टेष्टप्रमाणाविरुद्धादांशास्त्रपरिसमाप्तेरित्ययोऽधिकारो वेदितव्यः । वक्ष्यति–सात्मेतादिरिति । अनेकांताधिकारे सत्येवाद्यंतव्यपदेशो घटते, अन्यथा तदभावात् किं केन सह गृह्येत यतः संज्ञा स्यात् । तथा–सस्थानक्रियं स्वमिति–साधर्म्यवैधर्म्यात्मके सत्यनेकांतेऽकाराकारयोर्ह्रस्वदीर्घकालभेदेन वैधर्म्येऽपि तुल्यस्थानक्रियत्वेन साधर्म्यात् स्वसंज्ञाव्यवहारः सिद्धः । मधु मृदिति च भावाभावाभ्यां विभक्त्यंतेषु शब्देष्वर्थवत्ताऽनेकांतात् सिद्ध्यति । तदवयवानामपि । वृक्ष इत्यत्र विसर्जनीयस्यैकत्वार्थस्य च सद्भावः औकाराद्यभावश्चैकांते नास्ति । तथा "ध्यपाये ध्रुवमपादानं" इत्येवमादिना लक्षणेन पट्कारकी सर्वथा नित्यक्षणिकयोर्नोपपद्यते ध्यपायध्रौव्याद्यभावादिति । किं बहुना–उन्मिषितमात्रमप्यनेकांतमंतरेण न सिद्ध्यतीत्ययोऽधिकारो निर्णेतव्यः ।

* अइउण् १ । ऋॡक् २ । एओङ् ३ । ऐऔच् ४ । हयवरलण् ५ । ञमङणनम् ६ । झभञ् ७ । घढधष् ८ । जबगडदश् ९ । खफछठथचटतव् १० । कपय् ११ । शषसअंअः ×क ×पर् १२ । हल् १३ ।

इति प्रत्याहाराः । ऌवर्णाग्रहणं ऋवर्णऌवर्णयोरेकत्वाभ्युपगमात् । हकारस्य द्विरुपादानं वृक्षे हग्त्यधुक्षदिति सिद्ध्यर्थं ।

* **सात्मेतादिः ॥ २ ॥** इत्संज्ञकेन सहोच्चार्यमाणः आदिवर्णस्तन्मध्यपतितानां ग्राहको भवत्यात्मना सह । अण् । हल् । मिङ् । सुप् । सुट् ।

* **स्वस्याऽभाव्योऽपरोऽणुदित् ॥ ३ ॥** अण् उदिच्च गृह्यमाणः स्वस्य ग्राहको भवत्यात्मना सह न..

---

१ समाना स्थाने क्रिया यस्य, समाने स्थानक्रिये वाऽस्य तत् ।

* एवं चिह्नितानि सूत्राणि पं० रचिततान्यभयनन्दिविरचितमहावृत्तौ । १ चक्षेर्यङ्लुक् ।

इति जैनेंद्रव्याकरणस्याकारादिक्रमणिका समाप्ता ।



आमलक । बकुल । बदर । इदिति किं ? गार्गी पुत्र । उपीति किं ? गार्गी त्व । अमूत्वीगोप्योरिति किं ? पचभि सूचीभि आति पचमूचि । दशगोणि ।

**आदैगैप्** ॥ १६ ॥ आदैचो वर्णा ऐप्संज्ञा भवति । नाडायन । रैमय । नौमय । ऐप्प्रदेशा "मृजेरैप्" इत्येवमादय ।

**अदेदेप्** ॥ १७ ॥ अदेङो वर्णा एप्सञ्ज्ञा भवति । सर्ता । नेता । भाक्ता । एप्प्रदेशा "मिदरेप्" इत्यादय ।

**इकस्तौ** ॥ १८ ॥ तावैवेपौ इक एव स्थाने स्त । सानैम्मे-अनैर्पात् । गागयो नयति । इक इति किं ? आदेश्चला मा भूत् । यान । म्लायति । उम्भिता । तौग्रहण सज्ञाविधौ नियमार्थ । मथा । य ।

**न धुखेङगे** ॥ १९ ॥ धौरेकदेशस्य खनिमित्तेऽगे ऐनपौ न स्त । लोलुव- । पोपुव । मरीमृज । देध । धुखे इति किं ? हुत्र-लविता । अग इति किं ? रारनीति । इक इति किं ? राग ।

**गिङ्ति** ॥ २० ॥ गिति किति ङिति च परे एवैपौ न स्त । भूष्णु । जिष्णु । मृष्ट । चित । चिनुत । मृष्ट ।

**ईदूदेद्द्विर्दिः** ॥ २१ ॥ ईदूदेदतौ यो द्वि स दिसज्ञा भवति । मुनी इमौ । साधू एतौ । द्वे अत्र । ईदूदेदिति किं ? वृक्षाविमौ । द्विरिति किं ? वध्वर्थ । दिप्रदेशा "दे" इत्यादय ।

**मः** ॥ २२ ॥ टकारस्य स्थाने य कृतो मकारस्तस्मात्परौ ईदूतौ दिसज्ञौ भवत । अमी आसते । अमू अत्र । द इति किं ? शम्यत्र । म इति किं ? तेऽत्र ।

* **न्यजनाङ्** ॥ २३ ॥ निसञ्ज्ञोऽच् आङ्वर्जितो दिसज्ञा भवति । अ अपेहि । इ इद पश्य । उ उत्तिष्ठ । नीति किं ? चकारात्र । अनाङिति किं ? आ उष्ण ओष्ण । आ इहि-एहि । आ उदकात्-ओदकानात् । आ आर्येभ्य -आर्येभ्योऽस्य यशो गत भगवत्यवदास्य । ङ्किरण किं ? आ एवमनु मन्यसे । आ एव किल तत् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च य ।
एतमात ङित विद्याद्वाक्यस्मरणयोरङित् ॥

**ओत्** ॥ २४ ॥ ओदतो निर्दिमज्ञो भवति । अहो इद । उताहो एव ।

**कौ वेतौ** ॥ २५ ॥ निनिमित्त ओकार इति शब्दे परत वा दिसज्ञो भवति । साधो इति । साध विति । कावीति किं ? गवित्ययमाह । इतौ इति किं ? पटोऽत्र ।

**उञः** ॥ २६ ॥ उञो वा दिसज्ञा भवति इतौ परत । उ इति विति ।

**ॐ** ॥ २७ ॥ उञ ॐ इत्ययमादेशो भवति इतौ परत स च दिसज्ञो भवति । ॐ इति ।

**दाधा भ्वपित्** ॥ २८ ॥ दा धा इत्येव रूपा धव भुसञ्ज्ञा भवति पितौ मुक्त्वा । प्रणिदाता । प्रणिदयते । प्रणिददाति । प्रणिधाति । प्रणिधयति । विधीयते । अपिदिति किं ? दात बर्हि । अवदात मुख । भुप्रदेशा "भुस्थोरि" इत्येवमादय ।

**क्तक्तवतू तः** ॥ २९ ॥ क्त क्तवतुश्च तसज्ञौ भवत । कृत । कृतवान् । कारित । कारितवान् । तप्रदेशा "ते सेटि" आदय ।

**संज्ञा खुः** ॥ ३० ॥ सञ्ज्ञाशब्दनाम्योऽर्थे खु सञ्ज्ञो भवति । खुप्रदेशा "वा खो" इत्येवमादय ।

**भावकर्म दिः** ॥ ३१ ॥ भावकर्मणी दिसज्ञे स्त । दिप्रदेशा "दौ" इत्येवमादय ।

* **श्यनपुमुट् घं** ॥ ३२ ॥ शि अनपुमुट् च घसञ्ज्ञ भवति । कुण्डानि तिष्ठति, पश्य वा । राजा । राजानौ । राजान । राजान। राजानौ । श्यनपुमुडिति किं ? सामनी । राज्ञ पश्य । घप्रदेशा 'धेऽकौ" इत्येवमादय ।

+ **स्यिः संख्या** ॥ ३३ ॥ सख्याशब्द स्यिसञ्ज्ञो भवति । पचधा । पचकृत्व । स्यिप्रदेशा "स्यिर्विधार्थे धा" इत्येवमादय ।

+ **बहुगण भेदे** ॥ ३४ ॥ बहुगणशब्दौ भेदार्थे स्यिसञ्ज्ञौ भवत । बहुक । गणश । बहुधा ।

व्य त्पर च वर्जयित्वा । एरिति ख । प्राक्षि । चौलि । दैत्य । कामार । दादित्– चो कु । ष्टुना ष्टु । अभाव्य इति किं ? "त्यदादेर "इत्यत्र आकारस्य ग्रहण न्नास्ति भाव्यत्वात् ।

आदेश प्रत्ययश्चैव कटमेतो हि लक्ष्मणि ।
भाव्यशब्देन पचेते कथ्यते देवनदिभि ॥

अपर इति किं ? भिसोऽत ऐस् । धर्मै । द-याभिरित्यत्र ऐस् न भवति ।

**सस्थानक्रियं स्वं** ॥ ४ ॥ समाने स्थानक्रिये यस्य वर्णस्य स स्वसज्ञो भवति । अ अ अ उदात्तो-ऽनुदात्त स्वरितश्च ह्रस्वाडश्च । एव दीर्घौ ज्ञातव्यौ । इत्यवर्णस्याष्टादश भेदा परस्पर स्वा भवति । तथेव-र्णादीनामपि । एचा द्वादशभेदा ह्रस्वाभावात् । यवला द्विधा–ह्रस्वाडश्च । रेफोष्मणा स्वा न सति । वर्ग्यो वर्ग्येण स्व । लोकाग्रमित्यादि । स्थानग्रहण किं ? कचटतपाना मा भूत् । तर्प्ता । क्रियाग्रहण किं ? इचुयशाना मा भूत् । अश्च्योतति । स्वप्र-देशा "स्वेऽको दी "इत्येवमादय ।

**आकालोऽच् प्रदीपः** ॥ ५ ॥ अ आ आ ३ इत्येव कालोऽच् प्रदीपसज्ञो भवति । दधि । गौरी । एहि जिनदत्त ३ । हल्चा सघातनिवृत्त्यर्थमच्ग्रहण । प्रतक्ष्य । तितउच्छत्र । अन्यथात्र तुगृत्तुगिकल्पौ स्याता । प्रदीपप्रदेशा "प्रो नपि" इत्येवमादय ।

**अचश्च** ॥ ६ ॥ अच स्थाने प्रदीपसज्ञका भवति । अतिश्रि । लूयते । आव्रज जिनदत्ता ३ । अच इति किं ? मुनार् कुड । भिद्यते । धर्मनीरत् । चकार सज्ञानिधौ नियमार्थ । घौ, पथा, य, स ।

१ वर्णोत्पत्तिप्रदेशा स्थान । अकुहविसर्जनीयजिह्वामूलीयाना कट । इविसर्जनीययोरुर । कजिह्वामूलीयस्य जिह्वामूल । इ ए ए चुयशाना तालु । उ ओ औ पुपध्मानीयानामोष्ठौ । वस्य दन्तोष्ठ । ऋटुरषाणा मूर्धा । लृतुलसाना दता । नासिकानुस्वारस्य । क्रिया करण प्रयत्न । स्पृष्ट करण स्पर्शाना । ईषत्स्पृष्ट यणा । विवृतमचा । विवृततर मङाना । एओतोर्विवृततम । अवर्णस्यापि विवृततम । शानमवराम्य । ईषद्विवृत शसहाना ।

वर्गेष्वाद्या द्वितीयाश्च शषसा श्वासघोषका ।
तृतीयतुर्यवर्णा स्युर्मंदाप्राणा दसयुता ॥१॥

**नासिक्यो ङः** ॥ ७ ॥ नासिकाया भवो वर्णो ङसज्ञो भवति । ञमङणना । शात दात । ना सिक्य इति किं ? तप्त तप्तवान् । ङप्रदेशा "ङस्य झल्क्व्यो ङिङति"इत्यादय ।

**हलोऽनंतराः स्फः** ॥ ८ ॥ हलोऽनतरा अज्भिरव्यवहिता स्फसज्ञका भवति । धर्मे रमौ । इन्द्रे-नदरा । हल इति किं ? तितउ । अनतरा इति किं ? पनस । शाक । स्फप्रदेशा "स्फे रु "इत्येवमादय ।

**अधु मृत्** ॥ ९ ॥ धुवर्जितमर्थवच्छब्दरूप मृत्सज्ञ भवति । डित्थ । डवित्थ । शुक्ल । अधुरिति किं ? अहन् । मृत्प्रदेशा "ङ्याम्मृद " इत्येवमादय

**कृद्धृत्साः** ॥ १० ॥ कृदत हृदत ससज्ञक च मृत्सज्ञक भवति । ज्ञाता । द्रष्टा । प्राजापत्य । जिनधर्म । नियमोऽय त्यांताना कृद्धृतोरेवेति । इह मा भूत्— अभवन् । अर्थवत्पदसघाताना ससज्ञस्यैव मृत्सज्ञा न वाक्यस्य, साधुर्धम ब्रूते ।

**प्रो नपि** ॥ ११ ॥ नपि वर्तमानस्य मृद प्रो भवति । अतिरि । अतिमधु कुल । नतभ्रु मुख । नपीति किं ? राजकुमारी ।

**गोण्या मेये** ॥ १२ ॥ गोण्या प्रो भवति मेयेऽर्थे । गोणीमात्र गोणि । मेय इति किं ? गोणी ।

**स्त्रीगोर्नीचः** ॥ १३ ॥ न्यग्भूतस्य स्त्रीत्यात स्य गोशब्दातस्य च मृद प्रो भवति । अतिखट्व । निष्कौशाम्बि । निर्दय । चित्रगु । स्त्रीगोरिति किं ? अतिश्री । नीच इति किं ? नक्षत्रमाला । सुगौ ।

+ **नाशीयसो वे** ॥ १४ ॥ अभिलक्षणसन्नि-धेरीयसश्च य स्त्रीयस्तादतस्य नीचो वसे प्रो न भ-वति । पूर्वशाला । अर्द्धपिप्पली । बहव श्रेयस्योऽ-स्य स बहुश्रेयसी जिन । वस इति किं ? नि श्रेयसि ।

* **ह्रदुप्यमूचीगोण्योरुप्** ॥ १५ ॥ ह्रदुपि सति स्त्र्यन्यस्य नीच उप् भवति सूचीगोण्यौ विहाय । पचेन्द्राण्या देवता अस्य पचेंद्र । दशभि शष्कुली भि क्रीत दशशष्कुल । आमलक्या अवयव फल

+ एव चिह्नितसूत्राणा स्थाने एतान्यभयनदिविरचितमहावृत्तौ पाणिनीयवार्त्तिकानि ।

आमलकं । बकुलं । बदरं । ह्रदिति किं ? गार्गीपुत्रः । उपीति किं ? गार्गी त्वं । असूचीगोण्योरिति किं ? पंचभिः सूचीभिः क्रीतः पंचसूचिः । दशगोणिः ।

**आदैगैप्** ॥ १६ ॥ आदैचो वर्णाः ऐप्संज्ञा भवंति । नाडायनः । रैमयं । नौमयं । ऐप्प्रदेशाः "मृजेरैप्" इत्येवमादयः ।

**अदेङेप्** ॥ १७ ॥ अदेङो वर्णा एप्संज्ञका भवंति । सर्ता । नेता । भोक्ता । एप्प्रदेशाः "मिदेरेप्" इत्यादयः ।

**इकस्तौ** ॥ १८ ॥ तावैवेपौ इक एव स्थाने स्तः । सावैम्मे-अनैषीत् । गागयोः-नयति । इक इति किं ? आदेश्चलां मा भूत् । यानं । ग्लायति । उंभिता । तौग्रहणं संज्ञाविधौ नियमार्थं । मंथाः । यः ।

**न धुखेऽगे** ॥ १९ ॥ धोरेकदेशस्य खनिमित्तेऽगे ऐवेपौ न स्तः । लोलुवः । पोपुवः । मरीमृजः । देयः । धुखे इति किं ? लूत्र-लविता । अग इति किं ? रोरवीति । इक इति किं ? रागः ।

**ग्क्ङिति** ॥ २० ॥ गिति किति ङिति च परे ऐवेपौ न स्तः । भूष्णुः । जिष्णुः । मृष्टं । चितं । चितुतः । मृष्टः ।

**ईदूदेद्विर्दिः** ॥ २१ ॥ ईदूदेदंतो यो द्विः स दिसंज्ञो भवति । मुनी-इमौ । साधू एतौ । द्वे अत्र । ईदूदेदिति किं ? वृक्षाविमौ । द्विरिति किं ? वच्यर्थः । दिप्रदेशाः "देः" इत्यादयः ।

**मः** ॥ २२ ॥ दकारस्य स्थाने यः कृतो मकारस्तस्मात्परौ ईदूतौ दिसंज्ञौ भवतः । अमी आसते । अमू अत्र । द इति किं ? शम्यत्र । म इति किं ? तेऽत्र ।

* **न्यजनाङ्** ॥ २३ ॥ निसंज्ञोऽच् आङ्वर्जितो दिसंज्ञो भवति । अ अपेहि । इ इंद्र पश्य । उ उत्तिष्ठ । नीति किं ? चकारात्र । अनाङिति किं ? आ उष्णं ओष्णं । आ इहि-एहि । आ उदकांतात्-ओदकांतात् । आ आर्येभ्यः-आर्येभ्योऽस्य यशो गतं भट्टाकलंकदेवस्य । ङित्करणं किं ? आ एवमनुमन्यसे । आ एवं किल तत् ।

ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः ।
एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥

**ओत्** ॥ २४ ॥ ओदंतो निर्दिसंज्ञो भवति । अहो इदं । उताहो एवं ।

**कौ वेतौ** ॥ २५ ॥ किनिमित्तः ओकारः इति शब्दे परतः वा दिसंज्ञो भवति । साधो इति । साधविति । काविति किं ? गवित्ययमाह । इतौ इति किं ? पटोऽत्र ।

**उञः** ॥ २६ ॥ उञो वा दिसंज्ञा भवति इतौ परतः । उ इति विति ।

**ऊँ** ॥ २७ ॥ उञः ऊँ इत्ययमादेशो भवति इतौ परतः स च दिसंज्ञो भवति । ऊँ इति ।

**दाधा ध्वपित्** ॥ २८ ॥ दा धा इत्येवं रूपा धवः भुसंज्ञका भवंति पितौ मुक्त्वा । प्रणिदाता । प्रणिदयते । प्रणिददाति । प्रणिदधाति । प्रणिधयति । विधीयते । अपिदिति किं ? दातं बर्हिः । अवदातं मुखं । भुप्रदेशाः "भुस्थोरिः" इत्येवमादयः ।

**क्तक्तवतू तः** ॥ २९ ॥ क्तः क्तवतुश्च तसंज्ञौ भवतः । कृतः । कृतवान् । कारितः । कारितवान् । तप्रदेशाः "ते सेटि" आदयः ।

**संज्ञा खुः** ॥ ३० ॥ संज्ञाशब्दवाच्योऽर्थः खुसंज्ञो भवति । खुप्रदेशाः "वा खोः" इत्येवमादयः ।

**भावकर्म ङिः** ॥ ३१ ॥ भावकर्मणी ङिसंज्ञे स्तः । ङिप्रदेशाः "ङौ" इत्येवमादयः ।

* **श्यनपुसुट् घं** ॥ ३२ ॥ शि अनपुसुट् च घसंज्ञं भवति । कुंडानि तिष्ठति, पश्य वा । राजा । राजानौ । राजानः । राजानं । राजानौ । श्यनपुसुडिति किं ? सामनी । राज्ञः पश्य । घप्रदेशाः "धिऽकौ" इत्येवमादयः ।

+ **स्यिः संख्या** ॥ ३३ ॥ संख्याशब्दः स्यिसंज्ञो भवति । पचधा । पंचकृत्वः । स्यिप्रदेशाः "स्येर्विधार्थे धा" इत्येवमादयः ।

+ **बहुगणं भेदे** ॥ ३४ ॥ बहुगणशब्दौ भेदार्थे स्यिभतौ भवतः । बहुकः । गणकः । बहुधा ।

गणशः। भेद इति किं? वैपुल्ये सर्वे च मा भूत्। यद् सूत्र। गण गण।

+ कसेऽद्धयर्द्धं ॥३५॥ कनिधौ सनिधौ चाद्धयर्द्धशब्द स्यिसंज्ञो भवति। अद्धयर्द्धेन क्रीत अद्धयर्द्धक। अद्धयर्द्धशर्प्यं। कस इति किं? मामूद् घादौ।

+ दडर्द्धपाक् ॥ ३६ ॥ अर्धपूर्वो दडत कसनिधौ स्यिसंज्ञो भवति। अर्द्धपचमैः क्रीत अर्द्धपचमक। अर्द्धपचमशूर्प्यं।

+ यतुः ॥ ३७ ॥ यतुन्यात स्यिसंज्ञो भवति। द्वयक। त्रिपद्धा। एतावत्कृत्व। यावत्क। तावक।

+ डतिः ॥ ३८ ॥ डतित्यात स्यिसंज्ञो भवति। कतिन। कतिधा। कतिकृत्व।

ष्णान्ता चेद् ॥ ३९ ॥ षकारनकारांता सल्यता स्यिसंज्ञा भवति। षट्। पच। भवति सति। अतग्रहणं पदेशार्थं। तनाटनामिति भवति। तत्प्रयोजनान्यादौ। इत्प्रदेशा "डनिन्न" इत्येवमादय।

* त्निः सर्वादिः ॥ ४० ॥ सर्वादय शब्दा त्निसंज्ञा भवति। सर्वे। विश्वे। अन्ये। सर्वेषां। सर्वस्यै। सर्वस्मै। यस्मै। तस्मै। त्निप्रदेशा "ङे स्मै" इत्यादय।

+ समं सर्वयुक्ते ॥ ४१ ॥ समशब्द सर्वयुक्तार्थयो त्निसंज्ञो भवति। समस्मि न्। सर्वयुक्ते इति किं? समे देशे वसति।

* पूर्वपरावरदक्षिणोत्तरापराधरस्वमन्तरा व्यवस्थायां ॥ ४२ ॥ पूर्वादीनि शब्दो व्यवस्थायां वाच्यानानि त्निसंज्ञानि भवंति। पूर्वस्मै। परस्मै। अवरस्मै। दक्षिणस्मै। उत्तरस्मै। अपरस्मै। अधरस्मै। व्यवस्थायामिति किं? उत्तराणां कुरूणां। व्यवस्था दक्षिणेति किं? दक्षिणाय गायकाय देहि। प्रावीण्य त्य प्रतीयते। न तु दिग्देशकालवृत्तौऽर्थनियम।

+ स्वमज्ञातिधनाख्यायां ॥ ४३ ॥ स्वमित्यनुवृत्ता अज्ञातिधनाख्यायां त्निसंज्ञ भवति। यत् स्वस्मै रोचते तत् स्वस्मै ददाति। यदात्मने रोचते तदात्मीयाय ददातीत्यर्थ। अज्ञातिधनाख्यायामिति किं? स्वाय ददाति। स्वाय क्रियते। ज्ञातये धनाय चेत्यर्थे। आख्याग्रहण किं? ज्ञातिधनपर्यायस्य स्वशब्दस्य निषेधोऽन्यस्य तु मा भूत्। स्वस्मै पुत्राय। स्वस्मै गवे।

+ बहिर्योगोपसंव्यानेऽपुर्यंतरं ॥४४॥ बहिर्योगे उपसव्याने चातर त्निसंज्ञ भवति पुर निमुच्य। अतरस्मै वनाय देहि। बहिर्योग युक्ताय बाह्याय बाह्ये नाभ्यतरायेत्यर्थ। अतरस्मै वस्त्राय। उपसव्यानायोत्तरीयायोपसंवीयमानाय वा परिधानायेत्यर्थ। बहिर्योगोपसव्याने इति किं? अस्मिन्नतरे शीतान्युदकानि, मध्य इत्यर्थ। अपुरीति किं? अतरायां पुरि वसति। प्राकारात् बाह्यायामभ्यतरायां वेत्यर्थ।

* पूर्वादिरङ् ङ्यस्योर्वा ॥ ४५ ॥ पूर्वादयो नवाकाराता ङिङस्यो परत त्निसंज्ञा वा भवति। पूर्वस्मिन्, पूर्वे। पूर्वस्मात्, पूर्वात्। परस्मिन्, परे। परस्मात्, परात्। अवरस्मिन्, अवरे। अवरस्मात्, अवरात्। दक्षिणस्मिन्, दक्षिणे। दक्षिणस्मात्, दक्षिणात्। उत्तरस्मिन्, उत्तरे। उत्तरस्मात्, उत्तरात्। अपरस्मिन्, अपरे। अपरस्मात्, अपरात्। अधरस्मिन्, अधरे। अधरस्मात्, अधरात्। स्वस्मिन्, स्वे। स्वस्मात्, स्वात्। अतरस्मिन्, अतरे। अतरस्मात्, अतरात्। अदिति किं? पूर्वस्यां। पूर्वस्या। ङिङस्योराश्रय कार्यं विकल्प्यते अकच्च भवत्येव। पूर्वकस्मिन्, पूर्वके।

* जसि ॥ ४६ ॥ पूर्वादयो जसि त्निसंज्ञा वा भवति। पूर्वे, पूर्वा। परे, परा। अवरे, अवरा। दक्षिणे, दक्षिणा। उत्तरे, उत्तरा। अपरे, अपरा। अधरे, अधरा। स्वे, स्वा। अतरे, अतरा।

प्रथमचरमतयाल्पार्द्धकतिपयनेमाः ॥४७॥ प्रथमादयो जसि वा त्निसंज्ञा भवति। प्रथमे, प्रथमा। चरमे, चरमा। द्वितये, द्वितया। द्वये, द्वया। अल्पे, अल्पा। अर्द्धे, अर्द्धा। कतिपये, कतिपया। नेमे, नेमा।

* स्त्रिद्वंद्वे ॥ ४८ ॥ द्वद्वे से सर्वादिर्वा जसि स्त्रिसंज्ञो भवति। कतरकतमे। कतरकतमाः। इतरान्यतरे। इतरान्यतराः।

* न ॥ ४९ ॥ सर्वादिर्द्वंद्वे से स्त्रिसंज्ञो न भवति। कतरकतमाय। पूर्वपरात्। कतरकतमानां।

* वसे ॥ ५० ॥ सर्वादिर्वसे स्त्रिसंज्ञो न भवति। प्रियसर्वाय। द्व्यन्याय। त्र्यन्यात्। वग्रहणं किं? परमसर्वस्मै। सग्रहणं किं? आतिदेशिके वे निषेधो मा भूत्। एकैकस्मै देहि।

भासे ॥ ५१ ॥ भालक्षणे से सर्वादि स्त्रिसंज्ञो न भवति। मासपूर्वाय। संवत्सरावराय। से वर्तमाने पुनः सग्रहणं भासार्थे वाक्येऽपि निषेधार्थं। मासेन पूर्वाय।

* वा दिग्वे ॥ ५२ ॥ दिग्लक्षणे वसे सर्वादिर्वा स्त्रिसंज्ञा भवति। दक्षिणपूर्वस्यै। दक्षिणपूर्वायै। उत्तरपूर्वासा। उत्तरपूर्वाणा।

* तीयो ङिति ॥ ५३ ॥ तीयत्यांतो ङिति स्त्रिसंज्ञो वा भवति। द्वितीयस्मै। द्वितीयाय। तृतीयस्यै। तृतीयायै। ङितीति किं? द्वितीयाना।

* तास्था ऽतेऽलः ॥ ५४ ॥ तातस्य स्थाने निर्दिश्यमानोऽते वर्तमानस्याल स्थाने भवति। अदादेर -स्य। स्थानग्रहणं स्वस्वाम्यादिनिरासार्थं। अत इत्यादिमध्यनिवृत्त्यर्थं। अल् सर्वादेशनिवृत्त्यर्थं।

ङित् ॥ ५५ ॥ ङिदादेशोऽते वर्तमानस्याल स्थाने भवति। युष्मदस्मदोऽकद्वाऽनञ्खञौ-यौष्माकीण। आस्माकीन। नियमोऽय-ङिदेवानेकाल् अतस्य स्थानेऽनोऽन्य तानिर्दिष्टस्य सर्वस्य स्थाने भवति। ब्रूञो वच्-वक्ता।

* स्वासन्नः ॥ ५६ ॥ इह स्वासन्नस्यास्वासन्नस्य प्रसंगे, स्थानार्थगुणप्रमाणैर्यथास्वमासन्न एव निर्भवति। स्थानत – दडाग्र। साधूदित। अर्थत – वतडी चासौ युवतिश्च वातडयुवति। गुणत – पाक। त्याग। प्रमाणत – अमुष्मै। अमूभ्याम्॥ चेता स्तोतेत्यत्र स्थानानुवृत्तेर्न प्रमाणतोऽकारः। सुप्र्वासन्न इति किं? वाग्वसति।

+ युजां योगे ॥ ५७ ॥ युजा सन्निधिना यो निधि- स योगे सन्नध एव भवति। श्वशुरान्—श्वशुर्य। श्वशुर इति कस्यचिन्नाम तस्मात् श्वशुरस्यापत्य "अत इञ्" एव। श्वाशुरि।

रंतोऽणुः ॥ ५८ ॥ ऋवर्णस्य स्थाने अणु शिष्यमाण रपरो भवति। किरति। गिरु। अणिति किं? मातापितरौ। उरिति किं? गेय।

परस्यादेः ॥ ५९ ॥ कानिर्देशेन परस्य कार्यं शिष्यमाण तस्यादेरल स्थाने भवति। द्व्यन्तर्गे-रीदपोनात्–द्वीप। ईदास –आसीनोऽधीते।

शित्सर्वस्य ॥ ६० ॥ शिदादेश सर्वस्य स्थाने भवति। जस शी-के। जश्शसो शि-धनानि सति।

टिदादिः ॥ ६१ ॥ टित् आगम स ता-निर्दिष्टस्यादिर्भवति। वल्देरिट्–भविता।

किदंतः ॥ ६२ ॥ किदा आगम स तानिर्दिष्टस्यातो भवति। पिति कृति तुक्–धर्मवित्।

परोऽचो मित् ॥ ६३ ॥ मित् आगम स तानिर्दिष्टस्याचोऽन्त्यात् परो भवति। इदितोर्नुम्-वन्दे वृषभेश्वर।

* स्पर्द्धे ॥ ६४ ॥ द्वयोरन्यार्थयोस्तुल्यबलयोरेकत्र प्राप्तो य सधर्म स स्पर्द्धस्तस्मिन् परं कार्यं भवति। सुपि दी–देवाभ्या। वह्नौ झल्येत्–देवेषु। देवेभ्य –इत्यत्र द्वितय प्राप्त परमेवमेव।

* स्थानीवानल्विधौ ॥ ६५ ॥ स्थानीव भवत्यादेश। घुमुकृदृधृ सुम्मिङ्पदादेशा प्यादिवद्भवति, अस्तेर्भू भविता। तृच् सिद्ध। गुरद् ग्यादेश। प्रयाणा। गोदीन्न। कृद्वक्तृदादेश। प्रहृत्य। कृत्वा-तुक्। ह्रद्वद् हृदादेश। आक्षिक। भृसंज्ञा। सुब्वत् सुबादेश। धर्मय। सुपि दीर्घ। मिङ्व-न्मिङादेश। यमूरतु। मिङ्त्वात् पद। पदवत्पदादेश। अचिनुत। ङित्वादेर्निषेध। पदन्पदादेश

वो वर्द्धता । पदत्वाद्वित्व । अनल्विधानिति अल स्थाने विधो—पथा । स । पथित्यदा सुखे कर्तव्ये स्थानीव न भवत । क इष्ट ।

परेऽचः प्राचः ॥ ६६ ॥ परनिमित्तकोऽजा-पूर्वविधौ कर्तव्ये स्थानीव भवति । पटुमाचष्टे ति । कथयति । अवधीत् । पर इति किं ? ग्पय । पादस्य ख पद्भावे क्रियमाणे न स्थानीव ? । अच इति किं ? अभिमत्य । ञ्ख तुकि गमे) न स्थानीव भवति । प्राच इति किं ? भंधेय । लक्षणे ढणि क्रियमाणे आत्व न स्थानीव भवति ।

न द्विपदांतवरेयखकिञ्यम्कादेः ॥ ६७ ॥ । पदांत वर ई यख कि ञि अम् इत्येषा कु आदि-त्क्त-दी-अनुस्वार चर्त्व-परस्वत्व इत्येषा च विधौ व्ये अजादेश स्थानीव न भवति । दध्यत्र । । द्वित्वे कर्तव्ये यणादेश स्थानिवन्न भवति । ति । वियति । यणि कर्तव्ये श्नस ख स्था-न्न भवति । यायावर । पश्चात् इटि चात्व-यात खे कर्तव्ये यङोऽत खमगनिमित्त वरविधौ स्थानीव भवति । वदर्यौ फल वदर । ङ्यामित्य-स्त्रीत्यस्योप् न स्थानीव भवति । कङ्गति । यखे र्तव्ये अत ख किञ्ञनिमित्त न स्थानीव भवति । ग्यतेर्वय् । ऊठि कर्तव्ये क्रिनिमित्त णिख न ानीव भवति । अशामि । शाम शाम । णिजतात् । अमि च परतो दीर्घे कर्तव्ये णिख न स्थानीव वति । पाच् । णिचनिमित्त णिख कुत्वे कर्तव्ये न ानीव भवति । प्रतिदीव्ना । दीर्घे कर्तव्ये अनोख स्थानीव भवति । शिषति । मकारस्यानुस्वारे क-व्येऽख न स्थानीव भवति । जक्षतु । जक्षु । ख चर्त्वे कर्तव्ये न स्थानीव भवति । पिण्डि । तेण्डि । अनुस्वारस्य परस्वत्वे कर्तव्येऽत्ख न स्था-नीव भवति ।

द्वित्वेऽचि ॥ ६८ ॥ द्वित्वनिमित्तेऽच्यजादेश द्वित्वे कर्तव्ये स्थानिवद्भवति । ण्युङात्खयणयाया देशा प्रयोजन । आटिटत् । जग्मतु । पपु । ण्युङात्त्खस्य स्थानिवत्त्वादेकाचो द्वित्व । चक्रु । निनयिथ । निनाय । लुलविथ । लुलाव । यणया-यादेशाना स्थानिवत्त्वात् क्नूनैलोलौ द्वित्व । द्वित्व-निमित्त इति किं ? सुस्यूपति । नायमूह् द्वित्वनिमि-त्त । अर्चाति किं ? जेघ्रीयते । यङि परत ईत्व न स्थानिवत् ।

*ईप्केत्यासन्नप्राक्परयोः ॥ ६९ ॥ इतिर-र्थपर । ईवर्थे कार्यश्च यत्र निर्दिश्यते तत्र यथाक्रम पूर्वस्य परस्यासन्नस्य कार्यं भवति । अचोको यण्-दध्योदन । यादत्– दधाति । आसन्नग्रहण किं ? धर्मविदत्र । चिकीर्षति ।

नाशः खं ॥ ७० ॥ नाशशब्दवाच्योऽर्थ ख-सज्ञो भवति । रुदि । "ढो ढि ख" इत्यादय प्रदेशा ।

उबुजुश् ॥ ७१ ॥ तस्यैव नाशस्य उप् उच् उश् इत्येता सज्ञा भवति । स्तौति । जुहोति । पचाल । उबुजुश् प्रदेशा "ह्वादेरङुप्" "जनपद उश्" इत्यादय ।

त्यखे त्याश्रयं ॥ ७२ ॥ त्यखे कृतेऽपि त्या-श्रित कार्यं भवति । सुम्मिङ्गिखानि प्रयोजन । सर्वविन् । सो खेऽपि पदसज्ञा । अधोक् । "हल्ङ्याप्भ्य सुसिप्त्यनत्व" इति तिप खेऽपि पदसज्ञायामेपघत्व-मह्वचर्त्वानि स्यु । अग्निचित् । क्विप खेऽपि तुक् । पापचीति । यङ खेऽपि द्वित्वादि कार्यं । भाव्यते । णे खेऽप्यैन् भवति ।

नोमता गोः ॥ ७३ ॥ उबुजुशामुरस्या-स्तीति उमान् । तेन लुप्ते त्ये गोस्त्याश्रय कार्यं न भ-वति । मृष्ट । जुहुत । शवाश्रयाविपौ न भवत । गोरिति किं ? परीपृच्छीति । यङाश्रयौ द्वित्वयणि-कौ स्त ।

+रेऽहः ॥ ७४ ॥ रेफे कर्तव्येऽह उमता व-चनेन त्यखे त्याश्रय कार्यं न भवति । अहर्ददाति ।

+वृत्त्यंतस्य ॥ ७५ ॥ समासातस्य उमता त्यखे त्याश्रय कार्यं नास्ति । मुग्राचौ । परमगिरो । त्याश्रये हि पदत्वे कुत्वादि प्रसज्येत । वृत्तिग्रहण किं ? तर र्माम । अतग्रहण किं ? वाङ्लङ्गुच ।

* त्यंत्यात्प्रचः ॥ ७६ ॥ अचा मध्ये योऽयो ऽन्त्य तदादि शब्दरूप टिसञ्ज्ञं भवति। धर्मविद्—अत्रेच्छ-न्द । तत्तमुद्—अत्राच्छन्द । आताम्—आम्शब्द । टिप्रदेशा "टिद्देटेरे" इत्यादय ।

उपांत्यालुङ् ॥ ७७ ॥ अलामतस्य समीपोऽल् उङ्सञ्ज्ञो भवति । पच्—इत्यकार । पाचक । भिद्—इत्तिकार । भेत्ता। व्यवहिता यनिवृत्यर्थमुपान्त्यग्रहण । उङ्प्रदेशा "उडोऽत" इत्यादय ।

येनाल्विधिस्तदंतावोः ॥ ७८ ॥ येनाचा हला वा यो विधिर्विधीयते स तदन्तस्य अलि च यो विधि स तदादौ भवति । योऽचोऽय्यास्तु । सरोरुहं । जेय । शिक्षा । हट्ठ्ठधभुवोऽर्घायुञ्यो । चिक्षप्तु । चिक्षिपु ।

+ न सत्येऽनुगिति ॥ ७९ ॥ सत्विधौ लविधौ च तदन्तविधिर्नास्ति उगित्कार्यं विहाय । कष्ट परमश्रित । इस्तो न भवति । सौत्रनाडि । नडादे फण् न भवति। अनुगितीति किं ? भवती । अतिमवती।

+ यत्परस्तदादेः ॥ ८० ॥ यस्मात् प्रकृतिविशेषात् यस्या निर्भायते स तदादे समुदायस्य भवति। मातृभोगीण । समुदायस्य पुनतत्त्वेनैकपदत्वात् णत्व । पुनःकाम्यति । स्वेप काम्यो नाधिकाराच्च भवति । महान् पुत्रमिच्छति ।

+ स्त्री न्यङ् ॥ ८१ ॥ यस्मात् स्त्रीप्रत्ययस्तदादे न्यङ् अप्रधानमेव भवति । अतिकारीषगन्ध्यबन्धु । वधौ परे ष्यस्य प्रधानभूत ईङ् न भवति। न्यङिति किं ? परमकारीषगन्धीबन्धु ।

+ कृत् सतिसंज्ञकस्यापि ॥८२॥ कृ सञ्ज्ञस्य सतिसञ्ज्ञस्यापि सकारकस्यापि तदादे समुदायस्य ग्राहको भवति । अपिशब्दात् केवलस्यापि । उदके विशीर्ण । अवतप्तेनकुलस्थित । भस्मनिहुत ।

* यस्याच्चाचैन्दुः ॥ ८३ ॥ यस्य शब्दस्या चा मध्ये आद्य एप् स दुसञ्ज्ञो भवति । गार्गीय । ऐतिकायनीय । औपगवाय । अच्चेति हलामनिवृत्यर्थ। आदिग्रहण किं ? सभासनयने जात सभासनयन । एपीति किं ? दत्तस्याय दात्त । दुप्रदेशा "दाच्छ" इत्यादय ।

+ देश एवैङ् शैषिके ॥ ८४ ॥ यस्य शब्दस्य देशे एव वर्तमानस्य अचामाद्य एङ् स दुसञ्ज्ञो भवति शैषिके त्ये कर्तव्ये । सैपुरिकी । सैपुरीका । स्कौनगरीक । भोजकटीय । देशे किं ? देवनदिन ।

* प्राग्देशे ॥ ८५ ॥ पूर्वदेशे वर्तमानस्य यस्य शब्दस्याचामाद्य एङ् स दुसञ्ज्ञो भवति शैषिके त्ये कर्तव्ये । एणीपचनीय । गोनर्दीय ।

त्यदादिः ॥ ८६ ॥ त्यदादयो दुसञ्ज्ञका भवति । त्यदीय । तदीय । किमीय ।

* वा खौः ॥ ८७ ॥ खोर्नो दुसञ्ज्ञा स्यात् । दैवनदीय । दैवनदिन । पाद्मनदीय । पाद्मनदिन ।

* तसुत्सात्त्राशस्कृत्वस्मुज्वद्धामूक्त्वाभ्रुतमुसुम्भिडाभत्यन्यक्स्वारादयो भिः ॥८८॥ तस् तस् सात् त्रा शस् कृत्वस् सुच् वत् धा आम् क्त्वा अम् तुम् इत्येतदन्ता सुम्भिङ्प्रतिरूपा तिसञ्ज्ञा अन्यच प्रधानभूता स्वरादयश्च झिसञ्ज्ञका भवति । तदिति प्रत्याहार । "कायास्तसि" इत्यारभ्य आ "एधात्" तकारेण। तत्—द्वैधा। तस्—पीलुमूलत । सात्—भस्मसात्। त्रा—राजत्रा वसति। शस्—बहुश । कृत्वस्—शतकृत्व । सुच्—द्वि , त्रि । वत्—मुनिवत् वृत्त । धा—बहुधा । आम्—ईहाचक्रे । किंतमा । किंतरा । क्त्वा—कृत्वा । अम्—भोज भोज । स्वादुकार । तुम्—कर्तु । सुम्भिडाभ—रात्रौ । मात्राया । अस्ति । स्वस्ति । ति—अद कृत्य । अन्यक्स्वरादि—स्व तिष्ठति । स्व पश्यति । परमोच्चै । अन्यगिति किं ? अत्युच्चैसौ । अत्युच्चैस । झिप्रदेशा "झे" इत्यादय ।

* गाङ्कुटादिभ्योऽञ्णिडित् ॥ ८९ ॥ गाङ् कुटादीना च अञ्णिति त्य परत ङित्वत् कार्यं भवति। अध्यगीष्ट । अध्यगापाताम् । कुटिता । कुटितु । कुटितव्य । कुचिता । पुटिता । पुटितु । पुटितव्य । पुटिता। "आ ण" इति किं ? उत्कोटक । उत्कोट । उत्कोटयति ।

* इटि विजः॥ ९० ॥ विजेर्गिरिडादौ त्ये ङिद्वत् भवति । उद्विजिता । उद्विजितव्य । इटीति किं ? उद्वेग ।

**वोर्णोः** ॥ ९१ ॥ ऊर्णोतेरिडादौ से ङिद्वद् वा स्यात् । प्रोर्णविता । प्रोर्णुविता ।

***गेऽपि** ॥ ९२ ॥ पिद्वर्जिते गे ङिद्वद् भवति । जाग्रति । मृजति । ग इति किं ? जागरिता । मार्ष्टि । अपीति किं ? जागर्ति । मार्ष्टि ।

***लिटींध्यस्फात् किद्वत्** ॥ ९३ ॥ इधेरन्त्यस्माच्च धोरस्फातात् अपिति लिटि किद्वद् भवति । समीधे । समिधाते । निन्यतु । निन्यु । ममृजतु. । ममृजु । लिटीति किं ? इधिता । नेता । अस्फादिति किं ? दध्वसे । किरकरण किं ? ईजतु । ईजु ।

**+स्वंजेर्वा** ॥ ९४ ॥ स्वजेर्लिटि किद्वत् कार्यं वा स्यात् । परिषस्वजे । परिषस्वजे ।

**मृड्मृद्गुध्कुष्क्लिश्वदवसः क्त्वि** ॥ ९५ ॥ मृडादीना क्त्वाये परत किद्वद् कार्यं भवति । मृडित्वा । मृदित्वा । गुधित्वा । कुषित्वा । उदित्वा । उषित्वा । नियमार्थोऽय योग । एषामेव सेट्क्त्वाये किद्वत् । देवित्वा । सेवित्वा । वर्तित्वा । वर्द्धित्वा ।

**क्लिशः** ॥ ९६ ॥ क्लिश क्त्वि किद्वद् भवति । क्लिशित्वा ।

***रुद्विद्मुषग्रहस्वपप्रच्छां सनि च** ॥९७॥ रुदादीना सनि क्त्वि च परे किद्वद् स्यात् । रुरुदिषति । रुदित्वा । विविदिषति । विदित्वा । मुमुषिषति । मुषित्वा । जिघृक्षति । गृहीत्वा । सुषुप्सति । सुप्त्वा । पिपृच्छिषति । पृष्ट्वा ।

***सीकः** ॥ ९८ ॥ इगतस्य धो सकारादौ सनि परत किद्वद् भवति । चिचीषति । रुरूषति । तितीर्षति । सीति किं ? शिशयिषते । इक इति किं ? पिपासति ।

***हलि** ॥ ९९ ॥ सकारादौ सनि यो हल् तस्मिन् परे य इक् तस्य किद्वद् भवति । बिभित्सति । बुभुत्सते । विवृत्सति । इक इति किं ? विवप्सति ।

***सिलौ दे** ॥ १०० ॥ सकारादौ दपरे सिसे लिङि च यो हल् तस्मिन् परे य इक् तस्य किद्वद् भवति । अभित्त । अबुद्ध । भित्सीष्ट । बुत्सीष्ट । सिलाविति किं ? भेत्स्यते । द इति किं ? अद्राक्षीत् । हलीति किं ? अचेष्ट ।

**उः** ॥ १०१ ॥ ऋवर्णांतस्य धो सिलौ दे परे किद्वद् भवति । अहृत । आस्तीर्ष्ट । हृषीष्ट । आस्तीर्षीष्ट ।

**गमो वा** ॥ १०२ ॥ गमे सादौ सिलौ दे वा किद्वद् भवति । समगत । समगस्त । सगसीष्ट । सगसीष्ट ।

***यमः सौ स्वीकृतौ** ॥ १०३ ॥ यमे स्वीकृतौ दारपरिग्रहे सादौ सिसे दे वा किद्वद् स्यात् । उपायस्त भार्या । साविति किं ? उपायसीष्ट । स्वीकृताविति किं ? आयस्त पादौ ।

***सूचने** ॥ १०४ ॥ यमे सूचने प्रकाशने सादौ सौ दे किद्वद् कार्यं भवति । उदायत । उदायसाता ।

***घ्नः** ॥१०५॥ हते सादौ दे परे सौ किद्वद् भवति । आहत । आहसाता । आहसत ।

**भुस्थोरिः** ॥ १०६ ॥ भुसञ्ज्ञकाना तिष्ठतेश्च सादौ सौ दे इत्व भवति किद्वच्च । अदित । अधित । प्रास्थित । भुस्थोरिति किं ? व्यत्यदास्त ।

***सेट्क्ते पूङ्शीङ्डीङ्स्विन्मिद्क्ष्विद्धृषो न** १०७ पूङादीना सेटि क्तसञ्ज्ञे परे किद्वद् कार्यं न भवति । पवित । पवितवान् । शयित । शयितवान् । डयित । डयितवान् । प्रस्वेदित । प्रस्वेदितवान् । प्रमेदित । प्रमेदितवान् । प्रक्ष्वेदित । प्रक्ष्वेदितवान् । प्रधर्षित । प्रधर्षितवान् । सेड्ग्रहण किं ? पूत । पूतवान् । मिन्न । मिन्नवान् ।

**मृषः स्वार्थे** ॥ १०८ ॥ मृष स्वार्थे तितिक्षाया सेट्क्ते किद्वद् कार्यं न भवति । मर्षित । स्वार्थे इति किं ? अपमृषित वाक्यमाह ।

**वोदुङो भावारंभे शपः** ॥ १०९ ॥ उदुङो धो शप्विकरणात् भावे आरंभे च सेट्क्ते किद्वद् कार्यं वा न भवति । द्युतित । द्योतितमनेन प्रद्युतित । प्रद्योतित । "उदुङ" इति किं ? विदितमनेन । प्रविदित । भावारंभ इति किं ? रुचित कार्षापण । शप इति किं ? गुधितमनेन । प्रगुधित ।

***नोङ्थफवंचिलुंच्यृतितृषमृषकृशः क्त्व** ॥ ११० ॥ नकाराङ्ग थकारफकारयो धो क्त्वा-

दीना च सेटि क्त्वान्ते किद्वद् वा भवति । ग्रथित्वा । ग्रंथित्वा । श्रथित्वा । श्रंथित्वा । गुफित्वा । गुंफित्वा । वचित्वा । वंचित्वा । लुचित्वा । लुंचित्वा । ऋतित्वा । अर्तित्वा । तृषित्वा । तर्षित्वा । मृषित्वा । मर्षित्वा । कृशित्वा । कर्शित्वा । नोङ्ग्रहणं किं ? कोथित्वा । गोफित्वा । थफग्रहणं किं ? घसित्वा । क्त्वेति किं ? ग्रथितः ।

*व्युडोऽयो हलः सन्क्त्वोः ॥ १११ ॥ उकारेकारादेर्धोरयकारान्तस्य हलादेः सेटि सनि क्त्वायां च किद्वद् वा स्यात् । दिद्युतिषते । दिद्योतिषते । द्युतित्वा । द्योतित्वा । लिलिखिषति । लिलेखिषति । लिखित्वा । लेखित्वा । व्युड इति किं ? निवर्तिषते । वर्तित्वा । अय इति किं ? सिसेविषते । सेवित्वा । हलादेरिति किं ? एषिषिषति । एषित्वा । सेटीति किं ? बुभुक्षते । भुक्त्वा ।

युक्तवद्युशि लिंगसंख्ये ॥ ११२ ॥ उशर्थे युक्त इव लिंगसंख्ये भवतः । प्रत्ययार्थेन युक्तत्वात् प्रकृत्यर्थो युक्त इत्युच्यते । पंचालानां निवासो जनपदः पंचालाः । अंगाः । वंगाः । कलिंगाः । कुरवः । उशीति किं ? आमलक्याः फलं । लिंगसंख्य इति किं ? बदर्या अदूरभवो बदरी ग्रामः । तस्य वनं बदरीवनं ।

+चोरेव बहोः ॥ ११३ ॥ से द्युभूतस्यैव बहुविषयस्य युक्तवद्युशि लिंगसंख्ये स्तः । मथुरायाश्च पंचालाश्च मथुरापंचालाः । चोरेवेति किं ? पंचालमथुरे । बहोरिति किं ? गोदमथुरा ।

×जंबूखलतिकादिषु ते ॥ ११४ ॥ जंब्वादिषु खलतिकादिषु च यथासंख्यं ते लिंगसंख्ये युक्तवद्युशि भवतः । जम्ब्वा अवयवो जंबू । जंब्वौ । जंबू फलानि । द्राक्षा फलानि । मल्लिका पुष्पाणि । खलतिकस्य पर्वतस्यादूरभवानि खलतिकं वनानि ।

+गुणानामजातेः ॥ ११५ ॥ गुणानां विशेषणवाचिनां जातेरन्यस्य विशेष्यस्य लिंगसंख्ये स्तः । गुणश्चतुर्धा । मृद्कृत्तत्समभेदात् । शुक्लं वस्त्रं । शुक्लः पटः । शुक्ला शाटी । कृतं वस्त्रं । कृतः पटः । कृता शाटी । माथुरं कुलं । माथुरः पुमान् । माथुरी स्त्री । निर्मथुरं कुलं । निर्मथुरः पुमान् । निर्मथुरी स्त्री । गुणानामिति किं ? बदरी वृक्षः । "अजातेः" इति किं ? पंचालाः जनपदः ।

×न नृशि ॥ ११६ ॥ नरि मनुष्येऽर्थे उशि गुणानां लिंगसंख्ये न स्तः । चंचेव मनुष्या चंचा अभिरूपः । नृग्रहणं किं ? पंचालाः रमणीयाः । बहन्ना । बह्वध्यापका । बहुक्षीरघृता । बहुमाल्यफला । उशीति किं ? पट्वी नारी ।

इति जैनेंद्रव्याकरणे शब्दार्णवचन्द्रिकायां प्रथमस्याध्यायस्य प्रथमः पादः ।

---

## प्रथमाध्याये द्वितीयः पादः ।

भूवादयो धुः ॥ १ ॥ भू इत्येवमादयः शब्दाः[1] धुसंज्ञा भवति । भू एधं स्पर्द्ध गाधृ । भवति । एधते । स्पर्द्धते । गाधते । धुप्रदेशा "धोर्यङ्" इत्येवमादयः ।

अकर्मको घिः ॥ २ ॥ अकर्मको यो धुः स घिसंज्ञो भवति । अविद्यमानकर्मकोऽविवक्षितकर्मकोऽप्यकर्मकः । घिप्रदेशा "घे" इत्येवमादयः ।

अप्रयोगीत् ॥ ३ ॥ शास्त्रे कार्यार्थमुपदिश्यमानो वर्णः प्रयोगे न श्रूयते यः स इत्संज्ञो भवति । अण्-अच्-हल्-ञिमिदा-ङे णचलनिङ । इत्प्रदेशा "सातेतादि" इत्येवमादयः ।

यथासंख्यं समाः ॥ ४ ॥ समा शिष्यमाणा यथासंख्यं भवति । मिङ्थस्थतसोऽततता । प्रथमसंख्यस्य मिप प्रथमसंख्योऽमित्यादि ।

स्वरितेनाधिकारः ॥ ५ ॥ स्वरितेनाचार्यप्रतिज्ञया अधिकारो वेदितव्यः । "स्व" "पर" इत्यादि ।

*ङैदितो दः ॥ ६ ॥ ङकारेत ऐकारेतश्च धोर्दो भवति । शीङ्-शेते । इङ्-अधीते । एधै-एधते । आसि-आस्ते ।

डौ ॥ ७ ॥ डार्थे दो भवति । भूयते भवता । आस्यते भवता । क्रियते कटः । ह्रियते भारः ।

---

१ भूवादीनां वकारोऽयं लक्षणार्थः प्रयुज्यते ।
व्यवधाननिमित्तो यण्मवर्णयुवरयोरिव ॥ १ ॥
भुवो वार्थं वदतीति वादरायणादिक इति ।
भूवादय इति ह्यया भुवाऽर्था वाद्याऽथवा ॥ २ ॥

**कर्त्तरि ञे** ॥ ८ ॥ कर्त्तरि कारके आर्थे दो भवति । व्यतिभवते । व्यतिलुनते । व्यतिपचते ।

**+हृवहः** ॥ ९ ॥ हृवहिभ्या कर्तरि ञे दो भवति । सप्रहरते राजान । व्यतिवहते नद्य ।

*** न गतिहिंसाशब्दे** ॥१०॥ गतौ हिंसाया शब्दे चार्थे वर्तमानाद्धो कर्तरि ञे दो न भवति । व्यतिगच्छति । व्यतिधावति । व्यतिहिंसति । व्यतिघ्नति ।-व्यतिशब्दयति । व्यतिजल्पति ।

**परस्परान्योऽन्येतरेतरे** ॥ ११ ॥ एतैर्योगे आर्थे दो न भवति । परस्परस्य व्यतिलुनति । अन्योऽन्यस्य व्यतिपुनति । इतरेतरस्य व्यतिभवति ।

**+गेर्वोह्यसोः** ॥ १२ ॥ गे पराभ्या ऊहसिभ्या दो वा स्यात् । समूहति । समूहते । निरस्यति । निरस्यते । गेरिति किं ? ऊहते । अस्यति ।

**निविशः** ॥ १३ ॥ निपूर्वाद्विशेर्दो भवति । निविशते । निविशाते । निविशते ।

**परिव्यवक्रियः** ॥ १४ ॥ पर्यादिभ्य क्रीणातेर्दो भवति । परिक्रीणीते । विक्रीणाते । अवक्रीणीते ।

*** विपरो जेः** ॥ १५ ॥ विपराभ्या जयतेर्दो भवति । विजयते । पराजयते ।

**क्रीडोऽनुपर्याङः** ॥ १६ ॥ अन्वादे क्रीडेर्दो भवति । अनुक्रीडते । परिक्रीडते । आक्रीडते ।

**समोऽकूजे** ॥ १७ ॥ सपूर्वात् क्रीडेर्दो भवत्यकूजेऽर्थे । सक्रीडते । अकूज इति किं ? सक्रीडति शकटानि ।

***क्ष्णोः** ॥ १८ ॥ क्ष्णोतेर्दो भवति । सक्ष्णुते । सक्ष्णुवाते । सक्ष्णुवते शस्त्र ।

*** गिरावोमि** ॥ १९ ॥ सम गिरतेर्दो भवत्योमि प्रतिज्ञाने । सगिरते सर्वज्ञ । ओमीति किं ? सगिरति ग्राम ।

*** स्थः** ॥ २० ॥ तिष्ठतेरोमि दो भवति । सर्वमनेकाता मक्मातिष्ठते ।

***संव्यवप्रात्** ॥ २१ ॥ समादिपूर्वात् तिष्ठतेर्दो भवति । सतिष्ठते । वितिष्ठते । अवतिष्ठते । प्रतिष्ठते ।

**ज्ञीप्सास्थेयोक्तौ** ॥ २२ ॥ ज्ञीप्साया परपरितोषार्थमात्मरूपादिप्रकाशने स्थेयोक्तौ च सशय्य विवाद कृत्वा वा निश्चयकरणे स्थो दो भवति । तिष्ठते कन्या छात्रेभ्य । त्वयि तिष्ठते । मयि तिष्ठते निर्णयः ।

**उद ईहे** ॥ २३ ॥ उत्पूर्वात् स्थो दो भवति ईहेऽर्थे । धर्मे उत्तिष्ठते । ईह इति किं ? आसनादुत्तिष्ठति ।

***मंत्रेणोपात्** ॥२४॥ उपात् स्थो दो भवति मंत्रेण करणभूतेन चेत् सोपस्थिति । जगत्या उपतिष्ठते । तृष्टुभा उपतिष्ठते । मंत्रेणेति किं ? भर्त्तारमुपतिष्ठति भार्या यौवनेन ।

**+देवार्चासंगममैत्रीपथिषु** ॥२५॥ उपात् स्थो दो भवति देवार्चादिषु । अजितनाथमुपतिष्ठते । यमुना गगामुपतिष्ठते । महामात्रानुपतिष्ठते । अय पथा स्रुघ्नमुपतिष्ठते ।

**+वा लिप्सौ** ॥ २६ ॥ उपात् स्थो लिप्सार्थे दो वा भवति । भिक्षुर्दातृकुलमुपतिष्ठते,उपतिष्ठति वा ।

**घेः** ॥ २७ ॥ उपात् स्थो धेर्दो भवति । ज्ञानज्ञेयेपूपतिष्ठते । धेरिति किं ? स्वामिनमुपतिष्ठति ।

**समो गमृप्रच्छिस्वृच्छिश्रुविदृदृशः**॥२८॥ सपूर्वेभ्यो गमादिभ्यो धिभ्यो दो भवति । सगच्छते । सपृच्छते । सस्वरते । समियृते । समरिष्यते । समृच्छते । सश्रृणुते । सवित्ते । सपश्यते । धेरिति किं ? सगच्छति ग्राम । सपश्यति देवं । सवेत्ति धर्मं ।

**निसंव्युपाड्ह्वः** ॥ २९ ॥ न्यादिभ्यो ह्वयतेर्दो भवति । पुत्र निह्वयते । सह्वयते । विह्वयते । उपह्वयते ।

**आङः स्पर्द्धे**॥३०॥ आङ्पूर्वाद् ह्वो दो भवति स्पर्द्धेऽर्थे । मल्लो मल्लमाह्वयते । स्पर्द्ध इति किं ? गामाह्वयति गोधुक् ।

**+गमेः प्रतीक्षे** ॥ ३१ ॥ गमेर्ण्यंतादाङ्पूर्वाद्दो भवति प्रतीक्षे कालहरणे । आगमयस्व तावत् । प्रतीक्ष इति किं ? विद्यामागमयति ।

+नुप्रच्छः ॥ ३२ ॥ आङ्पूर्वाभ्यां नुप्रच्छाभ्यां दो भवति । आनुते शृगालः । आपृच्छते गुरून् ।

*दात्रः ॥ ३३ ॥ ददातेराङ्पूर्वाद्दो भवति । विद्यामादत्ते । धनमादत्ते ।

*न व्यसने ॥ ३४ ॥ दात्रो दो न भवति व्यसने विकसनेऽर्थे । विपादिका व्याददाति ।

+स्वांगकर्मकात् ॥ ३५ ॥ दात्र स्वांगकर्मकात् व्यसनेऽर्थे दो न भवति । आस्यं व्याददाति । स्वांगकर्मकादिति किं ? व्याददते पिपीलिका पतंगमुखं ।

*यमूद्नो धेश्च ॥ ३६ ॥ यमेर्हन्तेश्च धिसंज्ञकात् स्वागकर्मकाच्चाङ्पूर्वाद्दो भवति । आयच्छते । आयच्छेते । आहते । आघ्राते । आघ्नते । आयच्छते पाणिं । आहते वक्षः । धेरिति किं ? आयच्छति रज्जुं । आहति पापं ।

*व्युत्तपश्च ॥ ३७ ॥ व्युद्भ्यां तपेर्दो भवति धे स्वांगकर्मकाच्च । वितपते । उत्तपते राजा । वितपते पृष्ठं । धेरित्येव । उत्तपति सुवर्णं सुवर्णकारः ।

*वेः कुः ॥ ३८ ॥ विपूर्वात् कृञो धेर्दो भवति । विकुर्वते सैन्धवाः साधुदान्ताः । अन्नस्य पूर्णाश्छात्रा विकुर्वते ।

*शब्दकर्मणः ॥ ३९ ॥ वेः कृञो दो भवति शब्दकर्मकात् । क्रोष्टा विकुरुते स्वरान् । ध्वाङ्क्षो विकुरुते स्वरान् । शब्दकर्मण इति किं ? विकरोति कटं ।

*गंधनावक्षेपसेवासाहस्यप्रतियत्नप्रकथोपयोगे ॥ ४० ॥ एष्वर्थेषु कृञो दो भवति । अयमिममुत्कुरुते । श्येनो वर्त्तिकामुपकुरुते । गणकान् प्रकुरुते । परदारान् प्रकुरुते । काण्डं गुणस्योपस्कुरुते । जनापवादान् प्रकुरुते । शतं प्रकुरुते धर्माय । एष्विति किं ? धर्मं करोति ।

प्रसहनेऽधेः ॥ ४१ ॥ अधिपूर्वात् कृञो दो भवति प्रसहने पराभिभवेऽर्थे । वादिनोऽधिकुरुते । शत्रूनधिकुरुते । प्रसहन इति किं ? अधिकरोति ।

*पूजोत्संगोपनीतिज्ञानभृतिगणनव्यये न्यः ॥ ४२ ॥ पूजादिष्वर्थेषु नयतेर्दो भवति । नयते चार्वी स्याद्वादे । बालकमुदानयते । माणवकमुपनयते । नयते चार्वी तत्त्वार्थे । कर्मकरानुपनयते । भृतिदानेन स्ववशी करोति । मद्रका करं विनयन्ते । राजग्राह्य भाग निर्यातयन्तीत्यर्थः । शतं विनयते । व्ययीकरोति । एष्विति किं ? नयत्यजां ग्रामं ।

*कर्तृस्थे कर्मण्यमूर्तौ शमे ॥ ४३ ॥ कर्तृस्थेऽर्थे कर्मणि मूर्त्तिवर्जिते विवक्षिते नयतेर्दो भवति शमेऽर्थे । क्रोधं विनयते । हर्षं विनयते । कर्तृस्थे इति किं ? मुनिः परस्य क्रोधं विनयति । कर्मणीति किं ? बुद्ध्या विनयति । अमूर्त्ताविति किं ? गडुं विनयति । शम इति किं ? क्रोधमानयति ।

+हृगतिताच्छील्ये ॥ ४४ ॥ हरतेर्दो भवति गतेस्ताच्छील्ये । पैतृकमश्वा अनुहरते । मातृकं गावोऽनुहरते । गतिस्वभावमनुकुर्वन्ति ।

+शिक्षशक्तार्थेर्जिज्ञासोपलंभनाशिषि ॥ ४५ ॥ शिक्षादिभ्यो जिज्ञासादिषु दो भवति । शक्ते सन्नन्तात् शिक्षा । जिज्ञासायां-विद्या शिक्षते । तुभ्यं शपते । सर्पिषो नाथते । एष्विति किं ? भोक्तुं शिक्षति ।

वृत्तिसर्गतायने क्रमः ॥ ४६ ॥ वृत्त्यादिष्वर्थेषु क्रमेर्दो भवति । तर्केऽस्य क्रमते बुद्धिर्न प्रतिबध्यत इत्यर्थः । जैनेन्द्राध्ययनाय क्रमते उत्सहत इत्यर्थः । क्रमतेऽस्मिन् शास्त्राणि सन्तन्यते प्रस्यते वा ।

परापात् ॥ ४७ ॥ वृत्त्यादिषु परोपाभ्यां क्रमेर्दो भवति । पराक्रमते । उपक्रमते ।

ज्योतिरुद्गतावाङः ॥ ४८ ॥ आङ्पूर्वात् क्रमेर्दो भवति ज्योतिषां सूर्यादीनामुद्गमनेऽर्थे । आक्रमते सूर्यः । आक्रमते चन्द्रः । ज्योतिरुद्गताविति किं ? शिशुराक्रामति कुतपं ।

वेः स्वार्थे ॥ ४९ ॥ विपूर्वात् क्रमे स्वार्थे दो भवति । सुष्ठु विक्रमते । साधु विक्रमते । स्वार्थे इति किं ? विक्रामत्यजिनसंधिः ।

*प्रोपात् समर्थात् ॥ ५० ॥ प्रोपाभ्यां समर्थाभ्यां क्रमेर्दो भवति । प्रक्रमते । उपक्रमते भोक्तुं । प्रारभते इत्यर्थः ।

वाज्ञेः ॥ ५१ ॥ अगिपूर्वाद् क्रमेर्दो भवति वा । क्रमते, क्रामति । अगेरिति किं ? संक्रामति ।

*संप्रतेर्ज्ञोऽस्मृतौ ॥ ५२ ॥ सप्रतिभ्यां जानातेर्दो भवत्यस्मृतावर्थे। सजानीते । प्रतिजानीते शत । अस्मृताविति किं ? मातु सजानाति ।

*निह्नवे ॥ ५३ ॥ निह्नवेऽपलापेऽर्थे ज्ञो दो भवति । शतमपजानीते । सहस्रमपजानीते । निह्नव इति किं ? न त्व किमपि जानासि ।

धेः ॥ ५४ ॥ ज्ञा धिसंज्ञकाद्दो भवति । दध्नो जानीते । सर्पिषो जानीते । धेरिति किं ? स्वरेण पुत्र जानाति ।

दीप्त्युपोक्तिज्ञानेहविमत्युपमंत्रे वदः ॥५५॥ दीप्त्यादिषु वदेर्दो भवति । वदते चार्वी तत्त्वार्थे । कर्मकरानुपवदते । वदते विद्वान् स्याद्वादे । तपसि वदते । गेहे विवदते । परदारानुपवदते ।

व्यक्तवाक्समुक्तौ ॥ ५६ ॥ व्यक्तवाचा समुक्तौ सहोक्तौ वदेर्दो भवति । सप्रवदते ग्राम्या । सप्रवदते साधव । व्यक्तवागिति किं ? सप्रवदति चटका ।

अनोर्धेः ॥ ५७ ॥ धिसंज्ञकादनुपूर्वाद्वदेर्दो भवति । आचार्यस्यानुवदते शिष्य । धेरिति किं ? प्रागुक्तमनुवदति ।

*वा व्युक्तौ ॥ ५८ ॥ व्युक्तौ विवादे वदेर्वा दो भवति । विप्रवदते वादिन विप्रवदति वा । व्युक्ताविति किं ? सप्रवदति साधव ।

गिरोऽवात् ॥५९॥ अवपूर्वाद्गिरतेर्दो भवति । अवगिरते । अवगिरते ।

उच्चरोऽधेः ॥ ६० ॥ उत्पूर्वाच्चरतेर्दो भवत्यधे । गुरुवाचमुच्चरते । अधृणानुच्चरते । अधेरिति किं ? वाष्प उच्चरति ।

समो भया ॥ ६१ ॥ सपूर्वाच्चरतेर्दो भवति भातेन योगे । अश्वेन सचरते । रथेन सचरते । भयेति किं ? त्रैलोक्य सचरति जिनधर्म ।

+दाणोऽसत्कृत्येऽनर्थया ॥ ६२ ॥ दाण सपूर्वाद्दो भवत्यसत्कृत्येऽशिष्टव्यवहारेऽनर्थया भया योगे । दास्या सप्रयच्छते कामुक । असत्कृत्ये इति किं ? भार्यायै सप्रयच्छति । अनर्थयेति किं ? पाणिना सप्रयच्छति । ज्ञापकमिदमत्रार्थेऽशिष्टव्यवहारे भापि भवतीति ।

स्वीकृतावुपाद्यमः ॥ ६३ ॥ उपपूर्वाद् यमेर्दो भवति स्वीकृतौ पाणिग्रहणे। कन्यामुपयच्छते। स्वीकृताविति किं ? देवदत्तस्य भार्यामुपयच्छति यज्ञदत्त ।

श्रुस्मृदृशः सनः ॥ ६४ ॥ एभ्य सन्नतेभ्यो दो भवति। शुश्रूषते। सुस्मूर्षते। दिदृक्षते देवान्।

ज्ञः ॥ ६५ ॥ जानात सन्नताद्दो भवति। जिज्ञासते धर्म ।

नाऽनोः ॥ ६६॥ अनुपूर्वाज्जानातेर्दो न भवति सन्नतात् । अनुजिज्ञासति ।

प्रत्याङ्श्रोः ॥ ६७ ॥ प्रत्याङ्भ्या शृणोते सन्नताद्दो न भवति । प्रतिशुश्रूषति । आशुश्रूषति ।

शदेर्गात् ॥ ६८ ॥ शदेर्गनिपयाद्दो भवति । शीयते । शीयेते । शीयते । गादिति किं ? अशत्स्यत् । शशाद ।

*मृर्लुङ्लिङोश्च ॥ ६९ ॥ म्रियतेर्दो भवति लुङ्लिङो गपराच । अमृत । मृषीष्ट । म्रियते । म्रियता । अम्रियत । म्रियेत । लुङ्लिङोश्चेति किं ? मरिष्यति । अमरिष्यत् । ममार ।

*प्राग्वत्सनः ॥७०॥ प्राग्वत् प्राचीनदानिमित्तप्रकृतिवत् सन्नतात् दो भवति । ङेदितो द । शेते । शिशयिषते । स्पर्द्धते । पिस्पर्द्धिषते । निविश । निविशते । निविविक्षते । आक्रमते आदित्य । आचिक्रसते । सर्पिषो जानीते । सर्पिषो जिज्ञासते । प्राग्वदिति किं ? शिशत्सति । मुमूर्षति । दनिमित्ततात्र नास्ति ।

*आमवत् तत्कृः ७१॥ आमतस्येव तत्कृञो दो भवति । ईहाचक्रे । ईक्षाचक्रे । तत्कृरिति किं ? ईहावभूव । ईक्षामास ।

+न ॥ ७२ ॥ आमतात् तत्कृञो दो न भवति। उब्जाचकार ।

*ग्युयुजोऽयज्ञपात्रे ॥ ७३ ॥ ग्युद्भ्या, युजेर्दो

भवत्ययज्ञपात्रे । प्रयुङ्क्ते । नियुङ्क्ते । उपयुङ्क्ते । उद्युङ्क्ते । अयज्ञपात्र इति किं ? द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति । गिना सिद्धे नियमार्थमुद्ग्रहणं । हलन्तेषु-उद एव नान्यस्मात् । दुर्युनक्ति । सयुनक्ति ।

*अपस्कृः ॥ ७४ ॥ अपस्किरतेर्दो भवति । अपस्किरते वृषभो हृष्टः । अपस्किरते कुक्कुटो भक्षार्थी । अपस्किरते श्वा आश्रयार्थी । अपग्रहणं किं ? उपस्किरति ।

*भुजोऽत्रे ॥ ७५ ॥ भुजेर्दो भवत्यत्रेऽपालने । भुङ्क्ते । भुञ्जाते । भुञ्जते । अत्र इति किं ? भुनक्ति भरतः क्ष्मां ।

*नाऽणौ धेः प्राणिकर्तृकाण्णेः ॥ ७६ ॥ अण्यन्तावस्थायां यो धुर्धिः प्राणिकर्तृकस्तस्माण्ण्यन्ताद्दो न भवति । आस्ते देवदत्तः । आसयति देवदत्तं । शेते माणवकः । शाययति माणवकं । अणाविति किं ? आरोहयमाणं प्रयोजयति आरोहयते । धेरिति किं ? कटं कुर्वाणं प्रयोजयति कारयते । प्राणिकर्तृकादिति किं ? शुष्यन्ति व्रीहयः शोषयते व्रीहीनातपः । "णिचः" इति प्राप्तिः प्रतिषिध्यते ।

*यत्कर्म चेत् कर्ताऽनात्माऽस्मृतौ ॥ ७७ ॥ अण्यन्तायां णि तदन्ताद्दो भवत्यस्मृतावनाध्याने । णिप्रकृतेरणौ यत् कर्म स चेत् कर्ता अनात्मा स्यात् । पश्यन्ति भृत्या राजानं । दर्शयते भृत्यान् राजा स्वयमेव । यत्कर्मेति किं ? लुनाति दात्रेण लावयति दात्रं स्वयमेव । कर्तेति किं ? आरोहन्ति हस्तिनं हस्तिपकाः । आरोहयत्येनं महामात्रः । अनात्मेति किं ? हन्त्यात्मानं । घातयत्यात्मा । अस्मृताविति किं ? स्मरति वनगुल्मं कोकिलः । स्मारयत्येनं वनगुल्मः ।

*भीस्मेर्हेतुभये ॥ ७८ ॥ ण्यन्ताभ्यां भीस्मिभ्यां दो भवति हेतुभयेऽर्थे । मुण्डो भीषयते । जटिलो भीषयते । मुण्डो विस्मापयते । हेतुभय इति किं ? कुञ्चिकयैनं भाययति ।

वंचने गृधिवंचेः ॥ ७९ ॥ गृधिवञ्चिभ्यां ण्यन्ताभ्यां दो भवति वचने विसंवादनेऽर्थे । गर्द्धयते । वञ्चयते माणवकं । प्रतारयतीत्यर्थः । वञ्चन इति किं ? श्वानं गर्द्धयति । अहिं वञ्चयति ।

*ल्योऽर्चाऽधार्ष्ट्ये च ॥ ८० ॥ लिनातिलायतिभ्यां ण्यन्ताभ्यां दो भवत्यर्चायामधार्ष्ट्ये वञ्चने च । जटाभिरालापयते । श्येनो वर्तिकामपलापयते । कस्त्वामुल्लापयते ।

*मिथ्याकृञोऽभ्यासे ॥ ८१ ॥ मिथ्याशब्देन योगे कृञो ण्यन्ताद्दो भवत्यभ्यासेऽर्थे । पदं मिथ्या कारयते । स्तुतिं मिथ्या कारयते । मिथ्येति किं ? सूत्रं साधु कारयति । अभ्यास इति किं ? सकृत्पदं मिथ्या कारयति ।

*ञितः फलेशे ॥ ८२ ॥ ञितो धोर्दो भवति क्रियायाः फलेशे कर्तरि । पचते । लुनीते । कुरुते । फलेश इति किं ? पचति भक्तिकराः । वपति भृतकाः ।

वदोऽपात् ॥ ८३ ॥ अपाद् वदेर्दो भवति फलेशे । एकान्तवादमपवदते । अपवदेते ।

समुदाङ्यमोऽग्रंथे ॥ ८४ ॥ समादिभ्यो यमेर्दो भवत्यग्रन्थेऽर्थे । व्रीहीन् संयच्छते । भारमुद्यच्छते । पादमायच्छते । अग्रंथे इति किं ? उद्यच्छति चिकित्सां वैद्यः ।

ज्ञोऽगोः ॥ ८५ ॥ जानातेरगोर्दो भवति । गां जानीते । अश्वं जानीते । अगोरिति किं ? स्वर्गं प्रजानाति ।

णिचः ॥ ८६ ॥ णिजन्ताद्दो भवति फलेशे । ओदनं पाचयते । कटं कारयते । फलेश इति किं ? परस्य कटं कारयति ।

पादम्याङ्यमाङ्यसपरिमुहरुचिनृत्वद्वेवसः ॥ ८७ ॥ पादिभ्यो ण्यन्तेभ्यो दो भवति । पाययते । आदयते । दमयते । आयामयते । आयासयते । परिमोहयते । रोचयते । नर्तयते । धापयते । वादयते । वासयते ।

वा वागम्ये ॥ ८८ ॥ वाचा पदान्तरेण गम्यमाने फलेशे दो वा भवति । स्वं धान्यं पुनीते पुनाति वा । स्वं वाक्यमपवदते, अपवदति वा । स्वान् व्रीहीन् संयच्छते, संयच्छति वा । स्वां गां जानीते, जानाति वा । स्वमन्नं पाचयते, पाचयति वा । स्वं पुत्रं पाययते, पाययति वा । गतैः पड्भिर्योगैर्नित्ये दे प्राप्ते वाचा योगेऽनेन विकल्पः ।

र्मं ॥ ८९ ॥ यस्मान्म च दथ प्राप्नोति तस्मान्ममेव भवति । याति । प्रविशति । अधिकरोति ।

*परानुकृः ॥ ९० ॥ परानुभ्यां कृञो म भवति । पराकरोति । अनुकरोति ।

प्रत्यभ्यतिक्षिपः ॥ ९१ ॥ एभ्य क्षिपेर्मं भवति । प्रतिक्षिपति । अभिक्षिपति । अतिक्षिपति ।

*प्राद्वहः ॥ ९२ ॥ प्राद्वहेर्मं भवति । प्रवहति । प्रवहत । प्रवहति ।

* परेः ॥ ९३ ॥ परिपूर्वात् वहेर्मं भवति । परिवहति । नित्त्वात् फलेशे दे प्राप्ते म विधीयते । पृथग्वचनमुत्तरार्थं ।

*मृषः ॥ ९४ ॥ परेर्मृषो म भवति । परिमृष्यति । परिमृष्यत ।

व्याङश्च रमः ॥ ९५ ॥ व्याङ्भ्या परेश्च रमेर्मं भवति । विरमति । आरमति । परिरमति । एतेभ्य किं ? रमते । अभिरमते ।

उपात् ॥ ९६ ॥ उपात् रमेर्मं भवति । उपरमति । उपरमत । उपरमति । पृथग् वचनमुत्तरार्थं ।

वा धेः ॥ ९७ ॥ उपपूर्वात् धिसंज्ञकाद्रमेर्वा म भवति । यावद् भुक्तमुपरमति, उपरमते वा ।

बुध्युधनशजनेङ्प्रुद्रुश्रोर्णेः ॥ ९८ ॥ बुधादिभ्यो ण्यन्तेभ्यो म भवति । बोधयति । योधयति । नाशयति । जनयति । अध्यापयति । प्रावयति । द्रावयति । श्रावयति ।

चलनार्थात् ॥ ९९ ॥ चलनार्थेभ्योऽदर्थेभ्यश्च धुभ्यो ण्यन्तेभ्यो म भवति । चलयति । चोपयति । कम्पयति । वेपयति । आशयति । निगारयति । भोजयति । अभ्यवहारयति ।

क्यषो वा ॥१००॥ क्यषन्ताद्वा म भवति । पटपटायति । पटपटायते । लोहितायति । लोहितायते ।

द्युद्भ्यो लुङि ॥१०१॥ द्युतादिभ्यो लुङि परे वा म भवति । व्यद्युतत् । व्यद्योतिष्ट । अलुटत् । अलोटिष्ट । अक्षुभत् । अक्षोभिष्ट । अरुचत् । अरोचिष्ट ।

*सन्स्ये वृद्भ्यः ॥ १०२ ॥ वृतादिभ्य सनि स्ये च वा मं भवति । विवृत्सति । विवर्तिषते । वर्त्स्यति । वर्तिष्यते । अवर्त्स्यत् । अवर्तिष्यत । विवृत्सति । विवर्द्धिषते । वर्त्स्यति । वर्द्धिष्यते । अवर्त्स्यत् । अवर्द्धिष्यत । चिक्लृप्सति । चिकल्पिषते । कल्प्स्यति । कल्पिष्यते । अकल्प्स्यत् । अकल्पिष्यत ।

*लोः कृपः ॥१०३॥ कृपेर्लुटो वा म भवति । कल्प्ता । कल्पिता । कल्प्तास्मि । कल्पिताहे ।

नप्त्वाद्य आर्सं ॥ १०४ ॥ नपा निर्दिष्टो याप्यो भवत्यासमासाधिकारानिवृत्तेरित्येषोऽधिकारो ज्ञेय । वक्ष्यति प्रोधि च-भिदि । इक्ते रु-शिक्षे । रूपरस्य प्रस्य घिसंज्ञा प्राप्ता रुसंज्ञया बाध्यते ।

य्वौ स्त्र्याख्यौ मुः ॥ १०५ ॥ ईकारोकारौ स्त्र्याख्यौ मुसंज्ञौ भवत । कुमारी । किशोरी । वामोरू । वधू । य्वौ इति किं ? खट्वा । स्त्र्याख्याविति किं ? हे ग्रामणीः । हे खलपूः । मुप्रदेशा "अम्मो "इत्यादय ।

स्त्री ॥ १०६ ॥ स्त्रीशब्दो मुसंज्ञो भवति । हे स्त्रि । स्त्रियै । स्त्रियाः । स्त्रीणा ।

आमीयुवोः ॥ १०७ ॥ आमि परत इयुवो स्थानिनौ यो य्वौ स्त्र्याख्यौ तौ मुसंज्ञा भवत । श्रीणा । भ्रूणा । पृथुश्रीणा स्त्रीणा पुरुषाणा वा । नियमार्थमिद । आम्येव मुसंज्ञा नान्यत्र । हे श्री । हे भ्रू ।

वा ॥ १०८ ॥ वा मुसंज्ञा भवति आमीयुवो स्थानिनो । श्रीणा । श्रियां । भ्रूणा । भ्रुवा ।

ङिति प्रश्च ॥ १०९ ॥ य्वोर्य प्र स्त्र्याख्य इयुवोश्च स्थानिनौ यो य्वौ तेषा मुसंज्ञा भवति ङिति परे वा । बुद्ध्यै । बुद्धये । धेन्वै । धेनवे । श्रियै । श्रिये । भ्रुवै । भ्रुवे ।

*स्वसखिपति ॥ ११० ॥ य्वोर्य प्र स मुसंज्ञो भवति सखिपतिशब्दौ वर्जयित्वा । मुनये । साधवे । बुद्धये । धेनवे । असखिपतीति किं ? सख्या । सख्ये । सख्यु । पत्या । पत्ये । पत्युः ।

प्रो घि च ॥ १११ ॥ प्रो घि संज्ञो भवति । बोद्धा । भेत्ता । चशब्द संज्ञान्तरसमावेशार्थं । प्रविनय्य गत । ध्याश्रयो णेरयादेश स्याश्रयपूर्वनिपातश्च सिद्ध । घिप्रदेशा. "ध्युङ" इत्यादय ।

**स्फे रुः ॥ ११२ ॥** स्फपर प्र रुसंज्ञो भवति । स्पर्द्धा । कुटा । हुटा । रुप्रदेशा "सरोर्हल" इत्यादय । ।

**दीः ॥ ११३ ॥** दीर्घ रुसंज्ञो भवति । ईहा । ईक्षा । ईक्षाचक्रे ।

**यस्ये तदादिर्गुः ॥ ११४ ॥** यस्य त्य यस्य तस्मिन् परत तदादि शब्दरूप गुसज्ञ भवति । जुहोति । करोति । करिष्यति । यस्य इति किं ? हे देवदत्ते इ पश्येत्यत्र आदैप् प्राप्नोति । दध्यधुनेत्यत्र एरित्यादेरिव च । न चैत्र । तदादिरिति किं ? करिष्यामीति । अनेकत्येपि प्रातस्य दीत्व । गुप्रदेशा "गो" इत्यादय ।

**+मिङा वाक्यं ॥ ११५ ॥** मिङन्तेन प्रयुज्यमानेनाप्रयुज्यमानेन वा प्रत्यासत्तेस्तस्यैव मिङन्तस्य विशेषण शब्दरूप वाक्यसज्ञ भवति । धर्मो वो रक्षतु । देवदत्तेन कर्तव्य । वाक्यप्रदेशा "वाक्यटेष्प" प्रभृतय ।

**सुम्मिङन्तं पदं ॥ ११६ ॥** सुबन्त मिङन्त च पदसज्ञ भवति । धर्म । अस्ति । पदप्रदेशा "पदस्य" प्रभृतय ।

**नः क्ये ॥ ११७ ॥** नान्तस्य क्ये परत पदसज्ञा भवति । राजीयति । राजायते । त्सखे त्साग्रयमिति पदत्वसिद्धौ किमर्थमिद ? नियमार्थमिद नान्तमेव क्ये पदसज्ञ भवति नान्यत् । वाच्यति । मुच्यति ।

**सिति ॥ ११८ ॥** सिति त्ये परत पूर्वं पदसज्ञ भवति । भवतष्ठणछस् । भवदीय । ऊर्णाहशुभम्यश्च युस् । ऊर्णायु ।

**स्वादावधे ॥ ११९ ॥** अधे स्वादौ परत पूर्वं पदसज्ञ भवति । पयोभ्या । राजभ्या । राजभि । राजत्व । राजता । राजतर । राजतम । अध इति किं ? राजानौ । राजान ।

**यचि भः ॥ १२० ॥** यकारादावजादौ च स्वादावधे परत पूर्वं भसज्ञ भवति । गार्ग्य । दाक्षि । यचीति किं ? राजत्व । भप्रदेशा "भस्य" इत्यादय ।

**+मनुर्नभोऽङ्गिरो वति ॥ १२१ ॥** एते भसज्ञका भवति वति त्ये । मनुष्वत् । नभस्वत् । अङ्गिरस्वत् ।

**×वृष्णोऽश्ववसौ ॥ १२२ ॥** वृषन् इत्येतद् भसज्ञ भवत्यश्वे वसौ च । वृषणश्व । वृषण्वसु ।

**मत्वर्थे स्तौ ॥ १२३ ॥** सकारात तकारांत च शब्दरूप भसज्ञ भवति मत्वर्थे त्ये परत । तपस्वी । मरुत्वान् । विदुष्मान् । मत्वर्थे इति किं ? यशोभ्या । विद्वद्भ्या ।

**ध्यपाये ध्रुवमपादानं ॥ १२४ ॥** धिय बुद्धेरपाये प्राप्तिपूर्वकनिश्लेषे विभागेऽनिचलमवधिभूत वा यत् ध्रुव तदपादानसज्ञ भवति । ग्रामादागच्छति देवदत्त । अधर्माज्जुगुप्सते । अश्वात् धावत पतित । नपा निर्देश किं ? धनुषा विध्यति । कसपात्र्या भुङ्क्ते । धनुर्विध्यति । अपादानप्रदेशा "काऽपादाने" इत्येवमादय ।

**+आख्यातोपयोगे ॥ १२५ ॥** उपयोगे नियमपूर्वकविद्याग्रहणे आख्याता प्रतिपादयिता अपादान भवति । उपाध्यायादधीते । उपयोग इति किं ? नटस्य शृणोति ।

**कर्मणोपेयः संप्रदानं ॥ १२६ ॥** कर्मणा य उपेयोऽर्थ स सप्रदानसज्ञो भवति । उपाध्यायाय गा ददाति । देवाय बलिं प्रयच्छति । राज्ञे दड नितरति ।

**+श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यः ॥ १२७ ॥** एषा ज्ञीप्स्योऽर्थ सप्रदान स्यात् । देवदत्ताय श्लाघते देवदत्तायापह्नुते । तिष्ठते ब्राह्मणी छात्रेभ्य । देवदत्ताय शपते ।

**+रुच्यर्थानां प्रेयः ॥ १२८ ॥** रुच्यर्थाना धूनां प्रयोगे प्रेय प्रीयमाणोऽर्थ सप्रदान भवति । तुभ्य रोचते मोदक । मह्य स्वदते दधि ।

**धारेरुत्तमर्णः ॥ १२९ ॥** धारयतेरुत्तमर्णो

१ । देवदत्तशब्दस्यप्लुत परतो दुलत्स्वादरित्यैप् प्राप्त पर यस्य इति विशेषणान्न भवति ।

१ । पूर्वं ण सिद्धे नियमार्थमुपयोग एव यथा स्यात् ।

धर्नो सम्प्रदानं भवति। देवाय शतं धारयति। देवदत्ताय गां धारयति।

+राधीक्ष्योर्यद्दैवं ॥ १३० ॥ दैवं शुभाशुभलक्षणं तत्सम्बन्धि यत्कारकं तत् राधीक्ष्योर्योगे सम्प्रदानं स्यात्। पुत्राय राध्यति, ईक्षते वा। पुत्रस्य दैवं निरूपयतीत्यर्थः।

+प्रत्याङ्भ्यां श्रुवोऽभ्यर्थकः ॥ १३१ ॥ प्रत्याङ्भ्यां शृणोतेरभ्यर्थकोऽभ्युपगमकोऽर्थः सम्प्रदानं भवति। मित्राय प्रतिशृणोति, आशृणोति वा। अभ्युपगच्छतीत्यर्थः।

×प्रत्यनुगृण आख्याता ॥ १३२ ॥ प्रत्यनुपूर्वगृणातिना योगे आख्याता प्रतिपादयिता सम्प्रदानं स्यात्। उपाध्यायाय प्रतिगृणाति। अनुगृणाति वा। तमुत्साहयतीत्यर्थः।

×क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः ॥ १३३ ॥ क्रुधाद्यर्थानां धूनां योगे यं प्रति कोपः स सम्प्रदानं स्यात्। मित्राय क्रुध्यति कुप्यति वा। मित्राय द्रुह्यति। मित्राय ईर्ष्यति। मित्रायासूयति।

×न गेः क्रुधद्रुहः ॥ १३४ ॥ गिपूर्वयोः क्रुधिद्रुहोः यं प्रति कोपः स सम्प्रदानं न स्यात्। मित्रमभिक्रुध्यति, अभिद्रुह्यति वा।

×स्पृहेरीप्सितं ॥ १३५ ॥ स्पृहेर्योगे यदीप्सितं तत्सम्प्रदानं वा भवति। पुष्पेभ्यः स्पृहयति। पुष्पाणि स्पृहयति।

परिक्रयणं ॥ १३६ ॥ परिक्रयणं यत् तत्सम्प्रदानं वा भवति। शताय परिक्रीतः शतेन वा। सहस्राय परिक्रीतः सहस्रेण वा।

×गन्हादीनां बहुलं ॥ १३७ ॥ एषां योगे बहुलं सम्प्रदानं भवति। श्राद्धाय निगहते। शम्यो यर्मति। पत्य शेते। क्वचिन्न स्यात्। मनसा निगहते श्राद्ध। क्वचिद्द्वयं। मित्राय धर्मं ब्रूते। मित्रं धर्मं ब्रूते।

साधकतमं करणः ॥ १३८ ॥ अतिशयेन साधकं यत् सत् करणसंज्ञं भवति।

दानेन भोगं दयया सुरूपं ध्यानेन मोक्षं तपसेष्टसिद्धिं। सत्येन वाक्यं प्रशमेन पूजां वृत्तेन जन्माप्नुमुपैति मर्त्यः। पुल्लिङ्गनिर्देशात्—अक्षैर्दीव्यति।

दिवः कर्म ॥ १३९ ॥ दिवेर्यत् साधकतमं तत् कर्मसंज्ञं भवति। अक्षान् दीव्यति।

आधारोऽधिकरणः ॥ १४० ॥ अधिकरणं कारकमाधारसंज्ञं भवति। कटे आस्ते। गंगायां घोषः। दध्नि सर्पिः। हृदि तिष्ठति जिनः। निवाहेऽलंकृता कन्या। अङ्गुल्यग्रेऽश्वसहस्रं। आधारप्रदेशाः "ईनाधारे च" प्रभृतयः।

कर्मवाधेः शीङ्स्थासः ॥ १४१ ॥ अधिपूर्वाणां शीङ्स्थासामाधारः कर्मैव भवति। ग्राममधिशेते। पर्वतमधितिष्ठति। वसतिमध्यास्ते। एवकारः आधारनिवृत्त्यर्थः।

वसोऽन्वाध्याङः ॥ १४२ ॥ अन्वादिभ्यः परस्य वसेराधारः कर्म भवति। ग्राममनुवसति। गिरिमुपवसति। गृहमधिवसति। वनमावसति।

अभिनिविशश्च ॥ १४३ ॥ अभिनिविशसमुदायपूर्वस्य विशेराधारः कर्म भवति। ग्राममभिनिविशते। चकारात् कल्याणेऽभिनिवेशः।

×कालाध्वभावदेशं वाऽकर्मधीनां ॥ १४४ ॥ धीनां धूनां कालादिराधारः कर्म वा भवति अकर्म च। मासमास्ते। मासः आस्यते। क्रोशं स्वपिति। गोदोहमास्ते। कुरून् स्वपिति। पक्षे—रात्रौ सुप्यते। क्रोशेऽधीयते। गोदोहे आस्ते। ग्रामे उष्यते। कालादीति किं[1] शय्यायां शेते। अकर्मेति किं[1] मासमास्यते। क्रोशं सुप्यते।

कर्त्राप्यं ॥ १४५ ॥ कर्त्रा यदाप्यं तत्कारकं कर्म संज्ञं भवति। कटं करोति। ग्रामं गच्छति। हिमवतं शृणोति। जैनेन्द्रमधीते। ओदनं पचति। काष्ठानि दहति।

×वाऽकर्मणोऽणि कर्ता णौ ॥ १४६ ॥ अकर्मणो धोरण्यन्तस्य यः कर्ता स णौ सति कर्मसंज्ञो वा भवति। पचति देवदत्तः, पाचयति देवदत्तं।

१। अधारस्य-औपश्लेषिकसामीपिकवैषयिकाभिव्यापकवैषयिकनैमित्तिकौपचारिकानि षड्भेदाः।

देवदत्तेन वा। लिखति स, लेखयति त तेन वा। उत्तरत्र धिग्रहणात् इहाविवक्षितकर्मणो ग्रहण।

*ज्ञागम्यद्यर्थदृशेः ॥ १४७ ॥ ज्ञार्थाना गम्यर्थानामद्यर्थाना दृशेर्धाना चाण्यताना य कर्ता स णौ सति कर्मसज्ञो भवति। जानाति धर्मं देवदत्त । ज्ञापयति धर्मं देवदत्त। बुध्यते दत्त । बोधयते(ति)दत्त। गच्छति माणवको ग्राम। गमयति माणवक ग्राम। याति माणवक । यापयति माणवक। भुक्ते देवदत्त । भोजयति देवदत्त। अश्नाति भक्त देवदत्त । आशयति देवदत्तमादन। पश्यति देवदत्तो रूप। दर्शयति देवदत्त रूप। शेते शिशु । शाययति शिशु। आस्ते यज्ञदत्त । आसयति यज्ञदत्त। ज्ञादीनामिति किं? भेदयति काष्ठ मूलेन।

*शब्दे ॥ १४८ ॥ शब्दे वर्तमानस्याण्यतस्य धौ कर्ता णौ सति कर्म भवति। शृणोति दत्त शब्द। श्रावयति दत्त शब्द। जल्पति देवदत्त पुत्र। जल्पयति देवदत्त पुत्र।

+भक्षेर्हिंसायां ॥ १४९ ॥ भक्षेर्हिंसार्थस्याणि कर्ता णौ सति कर्म भवति। भक्षयति बलीवर्दा सस्य। भक्षयति बलीवर्दान् सस्य। हिंसायामिति किं? भक्षयति पिंडीं देवदत्तेन।

+वहेः प्रवेयः ॥१५०॥ वहेरणि कर्ता प्रवेयो णौ सति कर्म भवति। वाहयति बलीवर्दान् भार। प्रवेय इति किं? वाहयति भार वाहीकेन। नहि बलीवर्दवद् वाहीक प्राजति।

+न खाददिक्रंदिशब्दायह्वः ॥ १५१ ॥ एष्वोऽणि कर्ता णौ सति कर्म न भवति। खादयति, आदयति पिंडीं देवदत्तेन। क्रदयति, शब्दाययति, ह्वाययति देवदत्तेन। खाद्योरदर्थत्वात् परेया शब्दक्रियत्वात् प्राप्ति।

*हृक्रोर्वा ॥ १५२ ॥ हृक्रोरणि कर्ता णौ सति वा कर्म भवति। हरति भार दत्त । हारयति भार दत्त, दत्तेन वा। विकुर्वते सैंधवा। विकारयति सैंधवान् सैंधवैर्वा।

+दृश्यभिवाद्योर्दे ॥ १५३ ॥ दृशेरभिवादेश्चाणि कर्ता णौ सति कर्म वा भवति दविषये। पश्यति राजान भृत्या। दर्शयते राजान भृत्यान् भृत्यैर्वा। अभिवादयति गुरुर्दत्त। अभिवादयते गुरु गुरुणा वा दत्त।

स्वतंत्रः कर्ता ॥ १५४ ॥ स्वतत्र आत्मप्रधान कर्तृसज्ञो भवति। गौस्तिष्ठति। देवेन कृत। देवदत्तेन भुक्त।

तद्योजको हेतुः ॥ १५५ ॥ तस्य स्वतत्रस्य योजक प्रेरको य स हेतुसज्ञो भवति। भुजान प्रयोजयति भोजयति। कारयति।

निः ॥ १५६ ॥ आ"प्राग्गोस्ते"ये वक्ष्यते ते निसज्ञा भवति। इतोऽपेऽधिकारो ज्ञेय । निप्रदेशा "न्यजनाद्"प्रभृतय।

*चादयोऽसत्त्वे ॥ १५७ ॥ चादयो निसज्ञा भवत्यसत्त्वे वर्तमाना। च वा ह अह एवेत्यादि। असत्त्व इति किं? अस्यापत्य इ।

प्रादिः ॥१५८॥ प्रादयो निसज्ञा भवत्यसत्त्वे। प्रपरापसमन्ववनिर्दुर्व्याङ् न्यधयोऽप्यतिसूदभयश्च। प्रतिना सह लक्षयितव्या पर्युपयोरपि लक्षणमत्र॥ असत्त्व इति किं? विं प्रातीति विप्र।

क्रियायोगे गिः ॥ १५९ ॥ क्रियया धर्थेन योगे प्रादयो गिसज्ञका भवति। प्रणमति। परिणमयति। क्रियायोगे इति किं? प्रगता नायका अस्माद्देशात् प्रनायको देश।

तिः ॥१६०॥ प्रादयस्तिसंज्ञका भवति क्रियायोगे। प्रकृत्य। उपस्तुत्य। अभिहृत्य।

*च्विडाजूर्याद्यनुकरणं ॥ १६१ ॥ च्व्यत डाजत ऊर्याद्यनुकरण च तिसज्ञ भवति क्रियायोगे। शुक्लीकृत्य। विमलीभूय। पटपटाकृत्य। ऊरीकृत्य। उररीकृत्य। फट्कृत्य। खाट्कृत्य। ऊर्यादीना च्व्यर्थो न समस्यत पृथग्ग्रहण।

*क्षेपादरेऽसत्सत् ॥ १६२ ॥ असत्सतौ तिसज्ञौ भवत क्षेपादरयार्थयो। असत्कृत्य। सत्कृत्य। क्षेपादर इति किं? असत्कृत्वा गत।

१। योगग्रहणसामर्थ्यात् धात्वर्थगुण प्रादयस्त्र ..तिसज्ञास्तत्रगामीक्रियायोगे गिवऽपि नवति प्र..गिसाभयाण व न।

*भूषाऽस्त्रीनारेऽलमंतः ॥ १६३ ॥ अलमत रित्येती तिमञो स्ता भूषाऽध्याकारयो । अलंकृत्य । अतलंकृत्य । भूषाऽस्त्याकार इति किं ? अलं कृत्वा । अतलंकृत्वा मृत्तिका इयन्तो गत । मा कारि स्वाकृत्यर्थः ।

*कारिकाद्याः स्थित्याद्यनुपदेशे ॥ १६४ ॥ कारिकाऽदयो तिमञ्ञा स्ता । स्थित्यादिषु मर्यादादिष्वनुपदश च स्वय परामन । कारिकाकृत्य । अद कृत्य । स्थित्याद्यनुपदेश इति किं ? कारिका कृत्वा । अद कृत्वा । पत्नी, पाद कृत्वा चलथ ।

*कणेमनस्तृप्तौ ॥ १६५ ॥ कणेमन शब्दौ तिसञा स्तः तृप्तावभिलाषनिवृत्तौ । कणेहत्य मुक्त । मनोहत्य मुक्त । तृप्ताविति किं ? कणे हत्वा ।

पुरोऽस्त क्षिः ॥ १६६ ॥ पुरम् अस्त शब्दो क्षिाशा नियायाग तिस । स्त । पुरस्कृत्य, अस्तगम्य पुरस्कृति । क्षिरिति किं ? पू । पुरा । पुर । पुर कृत्वा । नगरी कृत्वार्थः । अस्त कृत्वा काढ गत । क्षिप्त्वा काड गत इत्यर्थः ।

गत्यर्थवदेऽच्छ ॥ १६७ ॥ अच्छशब्दो गत्यर्थेषु वदतौ च परत तिमञ्ञा भवति । अच्छगत्य । अच्छगम्य । अच्छोद्य । गत्यर्थवद इति किं ? अच्छ कृत्वा ।

तिरोऽन्तर्द्धौ ॥ १६८ ॥ तिरस्शब्दोऽन्तर्धौ व्यवधाने तिमञा भवति । तिरोभूय । अन्तर्द्धाविति किं ? तिरोभूत्वा स्थित ।

वा कृञि ॥ १६९ ॥ तिरस्शब्दोऽन्तर्द्धौ कृञि तिसञा भवति वा । तिरस्कृत्य । तिरस्कृत्वा ।

*मनस्युरस्युपाजेऽन्वाजेमध्येपदेनिवचने ॥ १७० ॥ एतानि शब्दरूपाणि तिमञ्ञानि तत्प्रतिरूपाणि कृञि वा तिमञ्ञानि भवति । मनसिकृत्य, मनसि कृत्वा । उरसिकृत्य, उरसि कृत्वा । उपाजेकृत्य, उपाजे कृत्वा । अन्वाजेकृत्य । अन्वाजे कृत्वा । मध्येकृत्य मध्ये कृत्वा । पदेकृत्य, पदे कृत्वा । निवचनेकृत्य, निवचने कृत्वा । प्रत्युदा-मनसि कृत्वा गत । उरसि कृत्वा पाणिं शेत ।

*स्वाम्येऽधिः ॥ १७१ ॥ स्वाम्येऽधिर्नामि तिसञा वा । अधिकृत्य, अधिकृत्वा । स्वाम्य इति किं ? अधाधिकृत्य ।

साक्षादादयश्चि ॥ १७२ ॥ साक्षादादिशब्दरूपाणि अच्व्यर्थ कृञि तिसञा वा भवति । साक्षात्कृत्य, साक्षात् कृत्वा । मिथ्याकृत्य, मिथ्या कृत्वा । अच्व्याति किं ? उष्णाकृत्य ।

हस्तेपाणौ स्वीकृतौ ति ॥ १७३ ॥ एतौ कृञि तिसञ्ञौ स्त स्वीकृतावात्मीकरणे । हस्तेकृत्य । पाणौकृत्य । स्वीकृताविति किं ? हस्ते कृत्वा कार्षापण गत । पुनस्तिग्रहण नित्यार्थ ।

प्राध्वं बधे ॥ १७४ ॥ प्राध्वशब्दो बधेऽर्थे कृञि तिसञ्ञो भवति । प्राध्वंकृत्य । बध इति किं ? प्राध्व कृत्वा शकट गत ।

जीविकोपनिषदौ ॥ १७५ ॥ एतावित्यार्थे कृञि तिमञ्ञौ स्त । जीविकाकृत्य । उपनिषत्कृत्य । इव इति किं ? जीविका कृत्वा गत ।

प्राग्धोस्ते ॥ १७६ ॥ ते गितिसञ्ञका घो प्रागव प्रयोक्तव्या । तथा चोदाहृत ।

लो मं ॥ १७७ ॥ लादेशो मसञ्ञो भवति । मिप् वस् मस् । सिप् थस् थ । तिप् तस् झि । शतृ च । नणनिर्देश दन बाधनार्थ । आक्रमत चद्रमा । सगस्यत वसो मात्रा ।

इडानं दः ॥ १७८ ॥ इड् आनश्च दसञ्ञौ भवत । इट् वहि महि । थास् आथा ध्वम् । त आता झइ । शानश्च ।

मिडस्त्रिशोऽस्मद्युष्मदन्याः ॥ १७९ ॥ मिडो मदसञ्ञानि त्रीणि त्रीणि वचनानि अस्मद् युष्मद् अन्य इत्येव सञ्ञानि भवति । मिप् वस् मसित्यस्मद् । सिप् थस् थेति युष्मद् । तिप् तस् झीत्यन्य । दानाभ्यत्र ।

साधने स्वार्थे ॥ १८० ॥ तस्य त्रयो वा अर्थ स्वार्थस्तस्मिन् साधने साधनेऽस्मदादयो ज्ञेयाः । अस्मत्पदस्यार्थे साधनेऽस्मत्त्रिक । युष्मत्पदस्यार्थे युष्मत्त्रिक । आभ्यामन्यस्यार्थेऽन्यत्रिक । पचामि, अह पचामीत्यादि । पचसि, त्व पचसीत्यादि । पचति, स पचतीत्यादि । एव दापि याप ।

पूर्वः सहोक्तौ ॥ १८१ ॥ तस्यास्मदादेः सहोक्तौ युगपत्कथने य पूर्व स प्रयोक्तव्य । अह च

हसो भवति। स्त्रापु चया वर्तते—अधिस्त्रि। गन्दिकाना ऋद्धेरभाव—दुर्गन्दिक। मद्राणा ऋद्धि—सुमद्र। मक्षिकाणामभावो—निर्मक्षिक। शीतस्यातीति—निशीत। तैसृकस्यायमवकाश—अनितैसृक। श्रीदत्तस्य शब्दख्याति—इतिश्रीदत्त। इतिपूज्यपाद। रथाना पश्चात्—अनुरथ पदाति। रूपस्य योग्य—अनुरूप। व्रतस्य सादृश्य—सव्रत। अर्थमर्थ प्रति—प्रत्यर्थ। ज्येष्ठानामनतिक्रमेण—अनुज्येष्ठ प्रविशतु। योग्यतावृद्धयर्थाभावात्यसदार्थानतिवृत्तय इति चत्वारोऽपि यथार्था। युगपच्चक्रेण—सचक्र धेहि। वृत्तस्य सपत् सवृत्त साधूला। तृण मद—सतृणमभ्यवहरति। कुम्भस्य समीप—उपकुम्भ। प्राभृतमत कृत्वा—सप्राभृतमधीते। अतशब्दोऽभ्यासेऽवसाने च वर्तते।

*यावद्यथेवानिवे ॥६॥ यावत्यथाशब्दौ एवार्थेऽनिरार्थे च सुवंतेन सह समस्यते स च हसो भवति। यावानोदन—यावदोदनमतिथीन् भोजय। ये ये वृद्धा—यथावृद्ध साधून्वंद। एवानिव इति किं? यावद् दत्त तावद्भुक्त। यथैवदत्त तथा देवदत्त।

*प्रतिनाल्पे ॥ ७ ॥ प्रतिशब्देनाल्पार्थेन सुवन्तेन सह सुवन्त हसो भवति। अल्प शाक—शाकप्रति। सूपप्रति। अल्प इति किं? वृक्ष प्रति विद्योतत विद्युत्।

*परिणा स्यक्षशलाकाः ॥८॥ स्यिसक्षोऽक्षशलाकाशब्दौ च परिणा सह हसो भवति। एकेनेद न तथा वृत्त यथा पूर्व जये। एकपरि। द्विपरि। त्रिपरि। चतुःपरि। पचप्रभृतिषु जय एवेत्यजया भवात् पचपर्यानि न भवति। अक्षेणद न तथा वृत्त यथा पूर्व जये। अक्षपरि। शलाकापरि। स्यादय इति किं? पचकेनेद न तथावृत्त।

वा ॥ ९ ॥ वेप्यधिकारो वेदितव्य। तदेतो दाश्रिमान।

*पर्यपाङ्बहिरंचः ॥ १० ॥ पर्यादय सुवतेन सह समस्यते वा। परि त्रिगर्ते वृष्टो देव। परि परित्रिगर्तेभ्य। अपत्रिगर्त। अप त्रिगर्तेभ्य। आकुमार यश समतभद्रस्य। आकुमारेभ्य। बहिर्ग्राम। बहिर्ग्रामात्। प्राग्ग्राम। प्राग्ग्रामात्।

लक्षणेनाभिमुख्येऽभिप्रती ॥ ११ ॥ आभिमुख्यार्थे वर्तमानावभिप्रतिशब्दौ लक्षणवाचिना सह वा हसो भवति। अग्निमभि, अभ्यग्नि शलभा पतति। अग्नि प्रति, प्रत्यग्नि शलभा पतति। लक्षणेनेति किं? साधुर्मातरमभि। आभिमुख्य इति किं? अभिनवोऽको यासा ता—अभ्यका गाव। अभिप्रतीति किं? येनाग्निस्तेन गत।

*दैर्घ्येऽनुः ॥ १२ ॥ दैर्घ्ये आयामविषये लक्षणवाचिसुवतेनानुर्हसो भवति। गगामन्वायता—अनुगग वाराणसी। अनुयमुन मथुरा।

*समीपे ॥ १३ ॥ समीपेऽर्थे वर्तमान सुवतेन सहानुर्हसो भवति। वनमनु, अनुवन गतोऽशनि। अनूपाध्यायमधीते।

तिष्ठद्ग्वादीनि च ॥ १४ ॥ एतानि च शब्दरूपाणि हससज्ञानि भवति। तिष्ठति गवोऽस्मिन् काले गर्भग्रहणाय दोहनाय वा तिष्ठद्गु। वहद्गु। कालविशेष। आयतीगव। खलेयव। खलेबुस। लूनयव। लूयमानयव। चकारो नियमार्थ। तिष्ठद्ग्वादीन्येव समस्यते। नान्यै सह। परम तिष्ठद्गु।

*पारेमध्येऽतस्तया ॥ १५ ॥ पारे मध्येऽत शब्दौ तातेन सह, हसो भवति वा। हसनियोगे चाकारत्व निपात्यते। पार गगाया—पारेगग। मध्य समुद्रस्य—मध्येसमुद्र। गिरेरत—अतर्गिर, अतर्गिरि।

*स्यिर्वंश्यैः ॥ १६ ॥ वंश्यवाचिभि सह स्यि सख्यावाची समस्यत हसो भवति। एको मुनिर्वश्योऽस्य एकमुनि। द्विमुनि। त्रिमुनि व्याकरणस्य।

नदीभिश्च ॥ १७ ॥ नदीवाचिभि स्यिर्हसो भवति। सप्त सिंधव—सप्तसिंधु। पचनद। द्वियमुन। त्रिगोदावर। चकारो नियमार्थ। नदीभिरन्यपदार्थविवक्षायामेव नान्यत्र। द्वे ईरावत्यौ यस्मिन् देशे स द्वीरावतीको देश।

*खौ ॥ १८ ॥ नदीवाचिभि सह हसो भवति खुविषये। उन्मत्ता गगा अस्मिन्—उन्मत्तगग देश। लोहितगग देश। शनैर्गग। खाविति किं? शीघ्रगगो देश।

***वे ग्रहणे प्रहरणे च सरूपं युद्धे ॥ १९ ॥** आर्थे कर्मव्यतिहारे ग्रहणे प्रहरणे च वर्तमान समान रूप तत्रैव वर्तमानेन सुवन्तेन सह हसो भवति युद्धे वाच्ये । केशाश्च केशाश्च मिथो ग्रहण यस्मिन् युद्धे तत्केशाकेशि । दण्डाश्च दण्डाश्चान्योन्यस्य प्रहरण यस्मिन् तद्दण्डादण्डि युद्ध । सरूपमिति किं ? केशाश्च कचाश्च मिथो ग्रहण यस्मिन् ।

**पं ॥ २० ॥** पमिति प्राग् बमादधिकारो ज्ञेय । इत पर पसो भवतीति निश्चय ।

**इपाऽच्च प्राप्तापन्ने ॥ २१ ॥** प्राप्त आपन्न इत्येतौ शब्दौ इवन्तेन सह पसो भवत्यकारश्चैतयो । प्राप्तो जीविका प्राप्तजीविक । आपन्नजीविक । प्राप्ता जीविका प्राप्तजीविका । आपन्नजीविका ।

***इसच्छ्रितादिभिः ॥ २२ ॥** ताभ्या श्रितादिभिश्च सह पसो भवति इवन्त पूर्वपद । जीविका प्राप्त जीविकाप्राप्त । सुखापन्न । श्राश्रित । दु खातीत । मोक्षगत । बहुवचनादाकृतिगणोऽय । तेन तावनु सुस्नु । व्यसनपतित । ओदनबुभुक्षुरित्यादि सिद्ध ।

***सामिस्वयं क्तेन ॥ २३ ॥** सामिस्वयशब्दौ डिसडपौ क्तान्तेन सह पसो भवति । सामिकृत । सामिभुक्त । स्वयधौतौ पादौ । स्वयनिर्लीनमाम्य । ऐस्वपव सद्यातादच्छद्युपरिश्च प्रयोजन । सामिभुक्त स्यापन्य सामिभुक्ति ।

**खट्वाऽक्रमे ॥ २४ ॥** खट्वा इवन्ता अक्रमे गम्यमाने क्तान्तेन सह पसो भवति । खट्वारूढो जाल्म । खट्वाप्लुत । अक्रम इति किं ? खट्वा रूढोऽध्यापकोऽध्यापयति ।

**काला: ॥ २५ ॥** कालवाचिन शब्दा इवन्ता क्तान्तेन सह पसो भवति । अहरतिश्रिता । रात्रिसङ्गाता मुहूर्ता । काला इति किं ? क्रोश कुटिला नदी ।

***व्याप्तौ ॥ २६ ॥** व्याप्तावविच्छेदेऽर्थे इवन्ता काला सुपा सह पसो भवति । अन्यतरमणीय । अन्यासुख । सर्वरात्रकल्याणी ।

**गुणोस्त्येपत् ॥ २७ ॥** ईषदिबन्त गुणवचनेन सह पसो भवति । ईषदपन्य पिङ्गल ईषत्पिङ्गल । ईषद्विकट । गुणोक्त्येति किं ? ईषद्भुक्त । ईषद्गार्ग्य ।

***भा तत्कृतयार्थेनोनैः ॥ २८ ॥** भात पूर्वपद भातार्थकृतार्थया गुणोक्त्या अर्थेन ऊनवाचिभिश्च सह पसो भवति । शङ्कुलया कृत खण्ड शङ्कुलाखण्ड । मदपटु । गिरिणा कृत काण गिरिकाण । कुसुमसुरभि । पुण्येनार्थ पुण्यार्थ । माषोन । तत्कृतयेति किं ? अक्ष्णा काण ।

***पूर्वादिभिः ॥ २९ ॥** भात पूर्वादिभि सह समस्यते । मासेन पूर्व मासपूर्व । सवत्सरावर । पितृसदृश । असिकलह । वाङ्निपुण । गुणमिश्रा धाना । जिह्वाश्लक्ष्ण । कुलसम ।

**साधनं कृता बहुलं ॥ ३० ॥** साधन कारक भात कृदन्तेन सह बहुल पसो भवति । आत्मना कृत आत्मकृत । नियहत । नखनिर्भिन्न । काकपेया नदी । श्वलेह्य कूप । कुक्कुटसपात्या ग्रामा । कण्टकसचेय ओदन । क्वचिन्न स्यात् । श्वभिर्लेह्य । दात्रेण लूनवान् । साधनमिति किं ? पुत्रेणागत । कृतेति किं ? धान्येन धनवान् ।

***अप्प्रकृतितदर्थार्थादिभिः ॥ ३१ ॥** अवन्त पूर्वपद प्रकृत्या तदर्थार्थशब्देन तदादिभिश्चार्थे सह पसो भवति । रथाय दारु—रथदारु । कुण्डलहिरण्य । पित्र इद पित्रर्थ । मात्रर्थ । देवबलि । गोहित । गोरक्षित । प्रजासुख । प्रकृत्यादिभिरिति किं ? रथनाय स्थाली । समर्थ इति किं ? गच्छ त्व रथाय दारु देवदत्तस्य गृहे ।

**+अपाऽलं ॥ ३२ ॥** अलमन्तेन सह पसो भवति । अल जीविकायै—अलजीविक । अपेति किं ? अलमतिप्रसङ्गेन ।

***ङा भ्यादिभिः ॥ ३३ ॥** ङात पूर्वपद भीप्रकृतिभि सह पसो भवति । वृकेभ्यो भी वृकभी । वृकभय । वृकभीत । ससारभीति । पापापत । सुखापोढ । रथापत्रस्त । भवमुक्त ।

***स्तोकारादर्थकृच्छ्रं क्तेन ॥ ३४ ॥** स्तोकार्था आरादर्था कृच्छ्रशब्दश्च क्तान्तेन सह पसो भवति । स्तोकान्मुक्त । अल्पान्मुक्त । पतिपयान्मुक्त ।

दूरादागत । विप्रकृष्टादागत । समीपादागत । अंतिकादागत । कृच्छ्रलब्ध ।

*ईप् शौंडादिभिः ॥ ३५ ॥ ईवंत पूर्वपद शौंडादिभि सह पसो भवति । अक्षेषु शौंड —अक्षशौंड । पानशौंड । अक्षधूर्त । पानधूर्त । अक्षकितव । पानकितव ।

ऋणे य्यैः ॥ ३६ ॥ यादिव्यातैः सह ईवंत ऋणे गम्यमाने पसो भवति । मासे देय ऋण मासदेय । संवत्सरदेय । त्र्यहदेय । ऋण इति किं ? मासे देया भिक्षा । य्यैरिति किं ? मासे दातव्य ।

खौ ॥ ३७ ॥ खुविषये ईवंत सुवंतेन सह प स्यात् । अरण्येतिलका । वनेहरितक्य । कूपपिशाचका । पूर्वाह्णस्फोटका । "ईपोऽद्धल" इत्यनुप् ।

*तत्राहोरात्रांशाः क्तेन ॥ ३८ ॥ तत्र अहरवयववाचि रात्र्यवयववाचि च ईवंत क्तांतेन सह प स्यात् । तत्रभुक्त । तत्रपीत । पूर्वाह्णकृत । अपराह्णकृत । पूर्वरात्रकृत । अपररात्रकृत । तत्राहोरात्रांशा इति किं ? शुक्लपक्षे कृत । क्तेनेति किं ? मध्याह्ने भोक्ता ।

क्षेपे ॥ ३९ ॥ क्षेपे गम्ये ईवंत क्तांतेन सह प भवति । अवततेनकुटस्थित । भस्मनिहुत । प्रवाहेमूत्रित । पे कृति बहुलमित्यनुप् ।

*ध्वांक्षादिभिः ॥ ४० ॥ ध्वाक्षप्रकारे क्षेपे कुत्साया ईवंत पसो भवति । तीर्थे ध्वाक्ष इव तीर्थध्वाक्ष । तीर्थकाक । तीर्थश्वा । श्मशानसारमय ।

पात्रेसमितादयः ॥ ४१ ॥ पात्रेसमितादय शब्दा गणपाठादेव पसज्ञा निपात्यते क्षेपे कुत्साया गम्यमाने । पात्र एव समिता —पात्रेसमिता । उदरमशक इव–उदरमशक । उदरकृमि । कूपमंडूक । अवटकच्छप । नगरकाक । मातरिपुरुष । पिंडीशूर । गेहनर्दी । गोष्ठेपंडित । गर्भेतृप्त ।

पूर्वकालैकसर्वजरत्पुराणनवकेवलं यथैकाश्रये ॥ ४२ ॥ पूर्वकालवाचि एकादीनि च एकाश्रये समानाधिकरणे सति सुपा सह यसो भवति पसश्च । पूर्व स्नात पश्चादनुलिप्त स्नातानुलिप्त । दग्धप्ररूढ । कृष्टमथीकृत । एकचर्या । सर्वरात्र । जरदार्कत । पुराणान्न । नवान्न । केवलज्ञान । चकार पसज्ञासमावेशार्थ । मात्रिका चासौ गौश्च मात्रिकगवी । यथाश्रयौ पुनरुक्तौ सिद्धा । एकाश्रये इति किं ? एकस्या शाटी ।

*दिगधिकं खुहृद्यौ ॥ ४३ ॥ दिग्वाची अधिकशब्दश्चैकाश्रय सुपा पसो भवति यनश्च खौ ह्रुति च विषय यौ च परत । खुविषय-दिक् । दक्षिणा कोसला दक्षिणकोसला । उत्तरकोसला । ह्रुविषये–दक्षिणस्या शालाया भव दाक्षिणशाल । औत्तरशाल । अधिकया षष्ट्या क्रीतोऽधिकषाष्टिक । युविषये–दक्षिणा शाला प्रिया यस्य दक्षिणशालप्रिय । अधिको गौर्धनमस्य अधिकगवधन । खुहृद्यावितिति किं ? उत्तरा ग्राम ।

*स्विः समाहारे रश्चाखौ ॥ ४४ ॥ स्वि सख्यावाची सुवंतेनोत्तरपदन सह पसो भवति यश्च समाहार गम्य खुहृद्यौ च रसज्ञश्चाखौ । स्वि-पचपूली । पण्णगरी । खौ–पचाम्रा । दशवटा । ह्रुविषय–पचाना नापितानामपत्य पाचनापिति । यौ–पच गावो धनमस्य पचगवधन । दशगवधन । रश्चेति चकार पसज्ञासमावेशार्थ । द्वे अगुली समाहृत द्व्यगुली । पात्रय अ सात । राद् डीप् । अखाविति किं ? पचपीणामिद पाचर्ष । रश्चेन् "रादुवनपसे" अण उप् स्यात् ।

*कुत्स्योऽपापाणकैः ॥ ४५ ॥ पापाणकमुक्तैरर्थात् कुत्सनै सह कुत्स्यवाची शब्द पसो भवति । वैयाकरणखसूची । क्षत्रियभीरु । श्रोत्रियकितव । भिक्षुविट । कुत्स्य इति किं ? वैयाकरणचौर । अपापाणकैरिति किं ? पापकुलाल । अणकनापित । विशेष्यपूर्वनिपातार्थ वचन ।

सामान्येनोपमानं ॥ ४६ ॥ सामान्यवाचिना सहोपमान सुवंत पसो भवति । शस्त्रीव श्यामा शस्त्रीश्यामा । मृगीव चपला मृगचपला । हंसगद्गदा । न्यग्रोधपरिमडला । शरकाडगौरी । दूर्वाकाडश्यामा । सामान्येनेति किं ? पर्वता इव बलाहका । फाला इव तडुला । उपमानमिति किं ? रामा श्यामा ।

*व्याघ्रादिभिरुपमेयोऽतद्योगे ॥ ४७ ॥ एते सहोपमेय षसो भवति तस्य सामान्यस्याप्रयोगे। पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्र । पुरुषसिंह । पुरुषर्षभ । अतद्योग इति किं? पुरुषोऽयं व्याघ्र इव शूर ।

विशेषणं विशेष्येणेति ॥ ४८ ॥ विशेषणवाचि सुबन्त विशेष्येण सह षसो भवत्येकाश्रये यथा। नीलोत्पल। लोहितशाटी। कृष्णसर्प। लोहिताहि। गौरसर्षप। कृष्णतण्डुल। विशेषणमिति किं? तक्षक सर्प। विशेष्येणेति किं? लोहितस्तक्षक। इतिशब्दो लौकिकनिवृत्त्यर्थ। रामो जामदग्न्य। अर्जुन कार्तवीर्य। वाचयमेन।

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराः ॥ ४९ ॥ पूर्वादय समस्यते सुबन्त षसो भवति यथा सहैकाश्रये। पूर्वपुरुष। अपरपुरुष। अपरकाय। प्रथमपुरुष। चरमपुरुष। जघन्यपुरुष। समानपुरुष। मध्यपुरुष। मध्यमपुरुष। वीरपुरुष।

*श्रेण्यादिः कृतादिभिः च्व्यौ ॥ ५० ॥ श्रेणिप्रभृतय समस्यते कृतादिभि सह च्व्यर्थे गम्यमाने। अश्रेणय श्रेणय कृता श्रेणिकृता। श्रेणिमता। पूगकृता। पूगमता। ऊककृता। ऊकमता। च्वाविति किं? श्रेणय कृता।

*निसमासौ क्तः ॥ ५१ ॥ निसमासौ ईषदनिष्पत्तौ क्तात समस्यते अर्थाक्तातेन। कृत चाकृत च कृताकृत। भुक्ताभुक्त। पीतापीत। पीतनिपीत। कृतापकृत। छिन्नाछिन्नित। पूतापनीत। निसमासाविति किं? सिद्ध चाभुक्त च।

+नानिट्सेट् ॥५२॥ सेट् क्तातमनिटा क्तातेन सह षसो न भवति। क्लिष्टाक्लिष्ट। पवितापूतमिति न भवति।

सन्महत्परमोत्तमोत्कृष्टं पूज्येन ॥ ५३ ॥ एते पूज्यन सह समस्यत एकाश्रये। सश्चासौ पुरुषश्च सत्पुरुष। महापुरुष। परमपुरुष। उत्तमपुरुष। उत्कृष्टपुरुष। पूज्येनेति किं? उत्कृष्टो गौ कर्दमात्।

तद्वृन्दारकनागकुञ्जरैः ॥ ५४ ॥ तत् पूज्य वृन्दारकादिभि सह षसो भवति। गौ श्चासौ वृन्दारकश्च गोवृन्दारक। गोनाग। अश्वनाग। गोकुञ्जर। मुनिकुञ्जर। तदिति किं? सुसीमो नाग।

*कतरकतमौ जातिप्रश्ने ॥ ५५ ॥ कतरकतमौ एकार्थौ जातिप्रश्ने गम्यमाने षसो भवति। कतरगार्ग्य। कतमगार्ग्य। जातिप्रश्ने इति किं? कतरो भवतोर्देवदत्त।

क्षेपे किं ॥ ५६ ॥ किमेतत् सुबन्तेन सह समस्यते क्षेपेऽर्थे। स किंराजा यो न रक्षति प्रजा। स किंसखा यो मित्र द्रुह्यति। स किंवैयाकरणो य शब्द न ब्रूयात्। क्षेप इति किं? को राजा मान्यखेटे।

पोटायुवतिस्तोककतिपयगृष्टिधेनुवशावेहद्बष्कयणीप्रवक्तृश्रोत्रियाध्यापकधूर्तैर्जातिः ॥ ५७ ॥ पोटादिभि सह जातिवाची शब्द समस्यते। इभ्या चासौ पोटा च इभ्यपोटा। क्षत्रियायुवति। अग्निस्तोक। घृतकतिपय। गोगृष्टि। गोधेनु। वहिवशा। गोवेहत्। गोबष्कयणी। कठप्रवक्ता। कठश्रोत्रिय। कठाध्यापक। कठधूर्त्त। जातिरिति किं? देवदत्ता पोटा।

चतुष्पाद्गर्भिण्या ॥ ५८ ॥ चतुष्पाद् जाति गर्भिणीशब्देन सह षसो भवति। गोगर्भिणी। अजगर्भिणी। चतुष्पादिति किं? ब्राह्मणी गर्भिणी। जातिरित्येव—स्वस्तिमती गर्भिणी।

प्रशंसोक्त्या ॥ ५९ ॥ प्रशंसावचनेन सह जाति समस्यते। गोप्रकाण्ड। गोमतल्लिका। अश्वप्रकाण्ड। अश्वमतल्लिका। गोमचर्चिका। अश्वमचर्चिका।

युवा खलतिपलितजरद्वलिनैः ॥ ६० ॥ खलत्यादिभि सह युवा समस्यते। युवखलति। युवपलित। युवजरन्। युववलिन। युवति खलति युवखलति। युवपलिता। युवजरती। युववलिना।

क्यतुल्याख्या अजात्या ॥ ६१ ॥ क्यातुल्याख्याश्च अजात्या सह षसो भवति। भोज्य च तदुष्ण च भोज्योष्ण। पानीयशीत। हरणीयचूर्णो घट। तुल्यश्वेत। तुल्यलोहित। तुल्यमहान्। सदृशश्वेत। सदृशश्वेत। अजात्येति किं? भोज्य ओदन। तुल्यो वैश्य।

*कुमारः श्रमणादिना ॥ ६२ ॥ कुमार शब्द श्रमणादिभि सह षसो भवत्येकाश्रये । कुमारी चासौ श्रमणा च कुमारश्रमणा । कुमारप्रव्रजिता । कुमारतापसी । कुमाराध्यापक । कुमाराध्यापिका ।

मयूरव्यंसकादयश्च ॥ ६३ ॥ मयूरव्यसकादय शब्दा षसज्ञा गणपाठादेव निपात्यते। निगतौ निसृतावसावस्य व्यसौ व्यस इव व्यसक । व्यसको मयूर मयूरव्यसक । छात्रव्यसक । कम्बोजमुड । यवनमुड । चकारोऽवधारणार्थस्तेन मयूरव्यसकादय एव समस्यते । अन्यै सह वृत्यतर न लभते। परमो मयूरव्यसक ।

कालाः मेयैः ॥ ६४ ॥ कालवाचिन शब्दा मेयै परिच्छेद्यै सह षसो भवति । मासो जातस्य मासजात । सवत्सरजात । द्व्यहजात ।

नञ् ॥ ६५ ॥ नञ् सुपा सह समस्यते । अगौ । अनेक । अधर्म ।

+वर्णो वर्णैः ॥ ६६ ॥ वर्णवाचि वर्णवाचिभि सह षसो भवति । शुक्लश्चासौ कृष्णश्च शुक्लकृष्ण । रोहितपाडु । कृष्णसारगः । विशेषणविशेष्यभावो नास्तीति वचन । शुक्लकृष्णादयर्थानामन्योन्यस्य विशेषणसमुदाये वर्तमानस्य शुक्लादेरशद्वारेण विशेषणत्वमित्यनियमन पूर्वनिपात प्रयोजन ।

+पूर्वापराधरोत्तरमभिन्नेनांशिना ॥ ६७ ॥ पूर्वादयश्चार्थांव्यशवाचिना आभिन्न ष भवति । पूर्व कायस्य पूर्वकाय । अपरकाय । अधरकाय । उत्तरकाय । पूर्वादीति किं ? दक्षिण कायस्य । अभिन्नेनेति किं ? पूर्व छात्राणां । अंशिन इति किं ? पूर्व नाभे कायस्य ।

+अर्द्धं नप ॥ ६८ ॥ अर्द्ध नपुसक समस्यते अंशिना सह । अर्द्ध पिप्पल्या –अर्द्धपिप्पली । अर्द्धकोशातकी । नपुसकमिति किं ? ग्रामार्द्धो देश ।

+द्वित्रिचतुर्थं वा ॥ ६९ ॥ एभ्यो ढ्यादयः अंशिना वा षसो भवत्यभिन्नेन । द्वितीय भिक्षाया द्वितीयभिक्षा । भिक्षाद्वितीय । तृतीयभिक्षा । भिक्षातृतीय । चतुर्थभिक्षा । भिक्षाचतुर्थ । द्व्यादीति किं ? पचम भिक्षाया ।

ता ॥ ७० ॥ तातेन सुबतेन सह षसो भवति । स्वर्गसुख । मोक्षमार्ग । राजपुरुष ।

कृति ॥ ७१ ॥ कृत्प्रयोगे या ता तदत सुपा समस्यते । इध्मानां व्रश्चन इध्मव्रश्चन । पलाशशातन । अविलवन । श्मश्रुकर्तन ।

याजकादिभिः ॥ ७२ ॥ एतै सह तात षसो भवति । देवाना याजक देवयाजक । श्रमणनाथपूजक । गुरुपरिचारक । गुरुपरिवेषक । तद्योजक । अर्थवाचक ।

+पत्तिरथं गणक ॥ ७३ ॥ पत्तिरथशब्दौ तातौ गणकेन सह समस्येते । पत्तीना गणक पत्तिगणक । रथगणक । पत्तिरथमिति किं ? कार्षापणाना गणक ।

न प्रतिपदं ॥ ७४ ॥ प्रतिपद या ता तदत न समस्यते । फलाना तृप्त । सर्पिषो ज्ञान । शतस्य दयते ।

निर्द्धारणे ॥ ७५ ॥ निर्द्धारणे जातिगुणक्रियाभि समुदायादेकदेशस्य निष्कृष्य धारणे या ता तदत न समस्यते । मनुष्याणा क्षत्रिय शूरतम । नारीणा श्यामा दर्शनीयतमा । अध्वगाना धावत शीघ्रतमा । गवा कृष्णा सपन्नक्षीरतमा ।

*ढङ्क्षिसचव्यैकद्रव्यैः॥७६॥ एतै सह तात षसो न भवति । चक्रधराणा पचम । तीर्थकृता षोडश । बलदेवाना नवम । ग्रामस्य पुरस्तात् । वृक्षस्योपरि । देवदत्तस्य कुर्वन् । देवदत्तस्य कुर्वाण । देवदत्तस्य कर्तव्य । आचार्यस्य श्रीदत्तस्य । शुकस्य माराविदस्य ।

*गुणैरस्वस्थैरविंशत्यादिभिः ॥ ७७ ॥ अस्वस्थैर्गुणैस्तात न समस्यते विंशत्यादिवर्जितै । काकस्य कार्ष्ण्य । बलाकाया शौक्ल्य । कटकस्य तैक्ष्ण्य । नात्र कार्ष्ण्यादिर्गुणस्य स्वास्थ्य प्रतीयते । कृष्ण काक इति यथा । गुणैरिति किं ? राजपुरुष । अस्वस्थैरिति किं ? कन्यारूप । कपिवर्ण । चदनगंध । स्नानरसी । अविंशत्यादिभिरिति किं ? गोविंशति । गोशत । सूत्रसाधन । वचनप्रामाण्य ।

कर्तरि क्तेन ॥ ७८ ॥ कर्तरि या ता तदत क्तेन सह षसो न स्यात् । इदमेषामासितं । इदमेषां यातं । इदमेषां भुक्तं । राज्ञां मतं । राज्ञां पूजितं । राज्ञामर्चितं । राज्ञामिष्टं ।

*द्विप्राप्तौ भायां ॥ ७९ ॥ कर्तरि भाया सत्यां द्विप्राप्तौ कृति कर्मणि या ता तदत ष न स्यात् । आश्चर्यो गवां दोहोऽगोपालकेन । रोचते मे ओदनस्य भोजनं देवदत्तेन । साधु खलु पयसः पानं विष्णुमित्रेण । द्विप्राप्ताविति किं ? देवदत्तस्य कृतो जिनदत्तेन । भायामिति किं ? साध्विदं शब्दानुशासनमाचार्यस्य ।

*ण्वुतृज्भ्यां ॥ ८० ॥ आभ्यां योगे कर्तरि या ता तदत सो न भवति । भवतः शायिका । भवत आसिका । भवतोऽग्रगामिका । तृजुत्तरार्थं ।

कर्तरि ॥ ८१ ॥ कर्तरि यौ ण्वुतृचौ ताभ्यां योगे कर्मणि या ता तदत न समस्यते । ओदनस्य भोजकः । सक्तूनां पायकः । अपां स्रष्टा । पुरां भेत्ता । कर्तरीति किं ? इक्षुभक्षिका मे धारयसि ।

क्रीडाजीविकयोर्नित्यं ॥ ८२ ॥ क्रीडायां जीविकायां च ण्वुना सह तांत नित्यं षसो भवति । उद्दालकपुष्पभञ्जिका । वारणपुष्पप्रचायिका । तालभञ्जिका । अशोकत्वादिका । नखलेखकः । अवस्करशुद्धकः । रमणीयकारकः । क्रीडाजीविकयोरिति किं ? पयसः पायकः ।

*तिकाद्द्रुः ॥ ८३ ॥ अमी सुबन्तेन सह समस्यते । प्रगत्य । ऊरीभूय । पटपटाकृत्य । शुक्लीकृत्य । शोभनः पुरुषः सुपुरुषः । अतिपुरुषः । कुत्सितः पुरुषः कुपुरुषः । ईषत् पिङ्गलः—आपिङ्गलः । पापः पुरुषो दुष्पुरुषः ।

+प्रात्यवपरिनिःप्रत्यादयो गतक्रान्तक्रुष्टग्लानक्रान्तस्थितादिषु केभ्यापङ्क्तिभिः ॥ ८४ ॥ प्रादयो गतादिष्वर्थेषु यांतादिभिः सह षसो भवति । तद्यथा-प्रादयो गतादिष्वर्थेषु यथा । प्रगत आचार्यः प्राचार्यः । सङ्गतोऽर्थः समर्थः । अत्यादयः क्रान्ताद्यर्थेषु । अतिक्रान्तः खट्वाम्—अतिखट्वः । उद्गतो वेलामुद्वेलः समुद्रः । अवादयः क्रुष्टाद्यर्थेषु यथा । अवक्रुष्टः कोकिलया—अवकोकिलं वनं । अनुगतमर्थेन—अन्वर्थं वच । पर्यादयो ग्लानादिष्वर्थेषु । परिग्लानोऽध्ययनाय पर्यध्ययनः । उद्युक्तः संग्रामाय-उत्संग्रामः । निरादयः क्रान्तादिषु कया । निष्क्रान्तः कौशाम्ब्या—निष्कौशाम्बिः । अपगतः शालाया—अपशालः । प्रत्यादयः स्थितादिष्वीप्सा । प्रतिष्ठितमुरसि प्रत्युरसं ।

वागमिङ् ॥ ८५ ॥ अमिङन्तं वाक्सत्त्रं समर्थेन नित्यं षसो भवति । कुम्भकारः । भारहारः । शरलावः । अमिङिति किं ? एधानाहारको भवति ।

क्षिनामैव ॥ ८६ ॥ क्षिनन्तेन अमन्तेनैव वागमिङ् षसो भवति । स्वादुङ्कारं भुङ्क्ते । लवणङ्कारं भुङ्क्ते । संपन्नङ्कारं भुङ्क्ते । अमेति किं ? काले भोक्तुं । एवेति किं ? प्रथमं भोजं । प्रथमं भुक्त्वा गच्छति ।

वा भादि ॥ ८७ ॥ भादीनि वाक्सत्त्वानि अमा सह वा समस्यते । मूलकोपदंशं भुङ्क्ते । मूलकेनोपदंशं भुङ्क्ते । पार्श्वोपपीडं शेते । पार्श्वाभ्यामुपपीडं शेते । पार्श्वे उपपीडं शेते ।

क्त्वा ॥ ८८ ॥ क्त्वान्तेन सह वा भादि षसो भवति । उच्चैः कृत्य, उच्चैः कृत्वा आचष्टे । नीचैः कृत्य, नीचैः कृत्वाचष्टे । भादीति किं ? अलं कृत्वा ।

*अवाग्न्यार्थेऽनेकं यं ॥ ८९ ॥ वाग्वर्जितस्यान्यस्य पदस्यार्थेऽभिधेयेऽनेकं सुबन्तं वमं सो भवति । यदे कृतं येन स कृतरदः । ऊढरथोऽनड्वान् । उपहृतपशुः । कण्ठेकालः । उरसिलोमा । उष्ट्रस्येव मुखमस्य उष्ट्रमुखः । गुरुस्थानः । अवान्यार्थे इति किं ? वृष्टे देवे गतः । अनेकमिति किं ? शोभितवान् देवः ।

+एकार्थे ॥ ९० ॥ एकार्थे सामानाधिकरण्यमनेकं सुबन्तं वमोऽन्यार्थे भवति । प्राप्तमुदकं यं स प्राप्तोदको ग्रामः । चित्रगुः । अप्रतिहतशासनः । अनेकगुणः । परमर्द्धिकः । सद्गन्धः । अविद्यमानपुत्रः । मत्तबहुमातङ्गं वनं । बहुतृणा । एकार्थमिति किं ? पञ्चभिर्भुक्तमस्य ।

+क्षिः ॥ ९१ ॥ क्षिरन्तं वमोऽन्यार्थे भवति । उच्चैर्मुखं यस्य स उच्चैर्मुखः । अनुग्रः । अन्तर्गः । अस्तिक्षीरा गौः । सुमुखा कन्या ।

*संख्येये स्विनामसदूराधिकाध्यर्द्धार्द्ध-

दिद्रू च ॥ ९२ ॥ आसन्नादीन्यर्थपूर्वं डड-न्तानि डिसञ्ज्ञानि च सख्येये वर्तमानेन स्यिसञ्ज्ञया विना सह समस्यते। आसन्ना दशानामिमे आसन्नदशा। आसन्नविंशा। अदूरदशा। अदूरविंशा। अधिकदशा। अर्द्धेनाधिका त्रिंशतिरिम अध्यर्द्धविंशा। अर्धं पचमं यासा ता अर्द्धपचमा त्रिंशतय इमे अर्द्धपचमविंशा नगतिरित्यर्थ। अर्द्धपचमत्रिंशा। समीपे दशानामिमे उपदशाः। उपविंशा। उपत्रिंशा। स्यिनेति किं? आसन्ना पुरुषाणामिमे। सख्येये इति किं? अधिका विंशतिर्गवा। आसन्नादीति किं? सनिकृष्टा दशानामिमे।

*स्यिः सुज्वाऽर्थे ॥ ९३ ॥ सुजर्थे वारे वाऽर्थे विकल्प सशय वा स्यिसञ्ज्ञायाश्चि बसो भवति सख्येये वर्तमानेन स्यिना। द्वौ वारौ दश इमे द्विदशा। त्रिदशा। चतुर्दशा। द्वौ वा त्रयो वा द्वित्रा। त्रिचतुरा। पचषा। सप्तदशा। सुज्वाऽर्थे इति किं? द्वाभ्या न त्रय।

दिशोऽन्तराले ॥ ९४ ॥ दिक्शब्दा स मस्यतेऽन्तरालेऽर्थे। दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तराल सा दिक् दक्षिणपूर्वा। पूर्वदक्षिणा। दक्षिणापरा। उत्तरपूर्वा।

*तेन सहेति तुल्ययोगे ॥ ९५ ॥ सहशब्द तेनेति भातेन सह तुल्ययोगे समानक्रियादियोगे बसो भवति। सह छात्रेणागत सछात्र। सपुत्र आगत। सशिष्य। सरूप। सकर्मकर। तुल्य योगे इति किं? सहैव दशभि पुत्रैर्भार वहति रासभी। इतिशब्दादतुल्ययोगेऽपि स। सपक्षको वादी मृते इत्यादि सिद्ध।

चार्थे द्वंद्वः ॥ ९६ ॥ चकारोऽर्थश्चाऽर्थ। तस्मिन्नर्थेऽनेक सुबन्त द्वदसञ्ज्ञ सो भवति। च इतरे द्वाभ्यौ। इतरेतरयोगसमाहारौ। प्लक्षन्यग्रोधौ। वागादिरपत्रीणौ। छत्रोपानह। वाग्दृषद। वाक्त्वच।

+समानामेकः ॥ ९७ ॥ समाना तुल्यार्थाना शब्दाना चाऽर्थे एक एव प्रयोक्तव्य। वक्रश्च कुटिलश्च वक्रौ कुटिलौ वा। सितश्च श्वेतश्च शुक्लश्च सिता श्वेता शुक्ला वा। समानामिति किं? घनगदिरपलाशा।

+सुप्यसंख्येयः ॥ ९८ ॥ सुपि सर्वत्र समानाना एकरूपाणा युगपत्प्रयोगे एक एव प्रयोक्तव्य सख्येय वर्जयित्वा। वृक्षश्च वृक्षश्च वृक्षौ। वृक्षश्च वृक्षश्च वृक्षश्च वृक्षा। हरिणी च हरिणी च हरिण्यौ। सुपीति किं? मातृमातारौ। मातरौ। मातारानिति भेद। असख्येय इति किं? एकश्च एकश्च। द्वौ च द्वौ च। पूर्वं समानार्थोऽर्थ। इद तु सरूपाऽर्थ।

+त्यदादि च ॥ ९९ ॥ त्यदादिना अन्यदादिना च सह त्यदादेर्द्वंद्वे प्राप्ते त्यदादिरेक एव प्रयुज्यते। स च देवदत्तश्च तौ। कश्च देवदत्तश्च कौ। स च त्व च युवा। त्व च भवाश्च भवती। स च स्थाली च ते। सा च देवदत्तश्च तौ। स च देवदत्ता च ते। स च कुड च ते। सा च कुड च ते। तच्च देवदत्तश्च तौ।

+भ्रातृपुत्राः स्वसृदुहितृभिः ॥ १०० ॥ भ्रात्रर्थपुत्रार्थयो स्वस्रर्थदुहित्रर्थाभ्या प्रयोगे भ्रात्रर्थ पुत्रार्थावेव प्रयुज्येते। भ्राता च स्वसा च भ्रातरौ। सोदर्यश्च स्वसा च सोदर्यौ। भ्राता च भगिनी च भ्रातरौ। पुत्रश्च दुहिता च पुत्रौ। सुतश्च दुहिता च सुतौ। पुत्रश्च सुता च पुत्रौ। बहुवचन पर्यायार्थं।

+पिता मात्रा वा ॥ १०१ ॥ पितृ मात्रा प्रयोगे पिता वा प्रयोक्तव्य। पिता च माता च पितरौ। मातापितरौ।

+श्वशुरश्वश्र्वा ॥ १०२ ॥ श्वशुरस्य श्वश्रू शब्देन प्रयोगे श्वशुरो वा प्रयोक्तव्य। श्वशुरश्च श्वश्रूश्च श्वशुरौ।

+वृद्धो यूनाऽनन्यार्थप्रकृतौ ॥ १०३ ॥ वृद्धस्य यूना सह प्रयोगे वृद्ध एव प्रयोक्तव्योऽनन्यार्थप्रकृतावभिन्नार्थप्रकृतौ। गार्ग्यश्च गार्ग्यायणश्च गार्ग्यौ। दाक्षिश्च दाक्षायणश्च दाक्षी। वृद्ध इति किं? गर्गगार्ग्यायणौ। यूनेति किं? गर्गगार्ग्यौ। अनन्यार्थप्रकृताविति किं? भागवित्तिभागवित्तिकौ। वात्स्यायनदौनकायनौ। पूर्वेन गर्ह सौवीरत्व चार्थोऽर्थोऽन्यप्रकृति।

+पुरुषः ॥ १०४ ॥ वृद्धाया यूना सह प्रयोगे

वृद्धयाची प्रयोक्तव्यः सा च वृद्धा स्त्री पुमान् स्यात् । गार्गी गार्ग्यायणश्च गार्ग्यौ । औपगवी च औपगविश्च औपगव्यौ ।

+स्त्रिया ॥ १०५ ॥ पुमांस्य प्राणिनः स्त्रिया सह प्रयोगे पुमान् एव प्रयोक्तव्यः । ब्राह्मणश्च ब्राह्मणी च ब्राह्मणौ । कठौ । मयूरौ । कुक्कुटौ । पटू ।

+ग्राम्यद्विखुरसंघेऽशिशौ स्त्री प्रायः॥१०६॥ ग्राम्यद्विखुराणां संघेऽशिशा स्त्रीपुंसानां युगपत् प्रयोगे स्त्री प्रयुज्यते प्रायः । गावश्चेमे गावश्चेमाः इमाः गावः । अजा इमाः । महिष्य इमाः । ग्राम्यग्रहणं किं ? रुरवश्चेमे रुरवश्चेमाः इमे रुरवः । द्विखुरेति किं ? अश्वाश्चेमे अश्वाश्चेमाः इमेऽश्वाः । संघ इति किं ? गौश्चायं गौश्चेयं इमौ गावौ । अशिशाविति किं ? वत्साश्चेमे वत्साश्चेमाः इमे वत्साः । प्राय इति किं ? उष्ट्राश्चेमे उष्ट्रश्चेमाः उष्ट्रा इमे ।

+नवनपकं च वा ॥ १०७ ॥ नपुंसकमनपुंसकेन सह प्रयोगे नपुंसकं प्रयोक्तव्यमेकत्वं च वा स्यादनन्यार्थप्रकृती । शुक्लं च वस्त्रं शुक्लश्च कंबलः ते इमे शुक्ले । तदिदं शुक्लं वा । शुक्लश्च शुक्ला च बृहतिका तानीमानि शुक्लानि । तदिदं शुक्लं वा । अनवेति किं ? शुक्लं च शुक्लं च शुक्ले । अनन्यार्थप्रकृताविति किं ? शुक्लं च वस्त्रं कृष्णश्च कंबलः तौ शुक्लकृष्णौ ।

+सिद्धपार्थत्व पुनर्वसुर्भे ॥१०८॥ सिद्धयभेऽऽर्थे वर्तमानात् परः पुनर्वसुशब्दः भेऽर्थे वर्तमानो द्वंद्वविषयो द्व्यर्थः नित्यमेकार्थो भवति । तद्यथा सिद्धपुनर्वसू । पुष्यपुनर्वसू । तिष्यपुनर्वसू । सिष्यार्थादिति किं ? आर्द्रापुनर्वसवः । भ इति किं ? तिष्यपुनर्वसवो माणवकाः ।

०योक्तं पूर्वं ॥ १०९ ॥ समासेषूक्तेषु यथा निर्दिष्टं पूर्वं प्रयोक्तव्यं । अश्रितः । धर्मश्रितः । मरणीः ।

राजदंतादौ ॥ ११० ॥ राजदंतादिषु पूर्वनिपातेऽर्हमं परं सपूर्वं प्रयोक्तव्यं । दंतानां राजा राजदंतः । वनस्याग्रे अग्रेवणं । पूर्वं वासितं पश्चाल्लिप्तं लिप्तवासितं । नग्नमुषितः । उलूखलमुसले । विष्वक्सेनार्जुनौ । दारजारौ । भार्यापती । जंपती । दंपती । जायापती ।

+संख्याल्पा ॥ १११ ॥ से अल्पा संख्या पूर्वं प्रयोक्तव्या । द्विदशाः । त्रिदशाः । चतुर्दश । पंचदश ।

+द्वंद्वे घिसेकं ॥ ११२ ॥ द्वंद्वे घिसंज्ञं मुनर्थं चेकं पूर्वं प्रयोक्तव्यं । कुशकाशं । तृणकाष्ठं । अग्निधूमं । वायुतोयं । मुनिगुप्तौ । घिसंज्ञेति किं ? कुक्कुटमयूरौ । एकमिति किं ? गुरुरविभास्करस्तनपाः । रविभास्करस्तनपगुरवः ।

अजाद्यत् ॥ ११३ ॥ अजाद्यदकारांतमेकं पूर्वं प्रयोक्तव्यं द्वंद्वे । इंद्रचंद्रौ । उष्ट्रखरं ।

अल्पाच्तरं ॥ ११४ ॥ द्वंद्वे सेऽल्पाच्तरमेकं पूर्वं प्रयुज्यते । धवखदिरौ । वाग्वायू । प्लक्षन्यग्रोधं ।

+अर्च्यं ॥ ११५ ॥ द्वंद्वेऽर्च्यमर्च्यार्हितं पूर्वं प्रयुज्यते । कामक्रोधौ । मधुकरौ । दीक्षातपसी । वासुदेवार्जुनौ ।

+वर्णभ्रात्रनुपूर्वं ॥ ११६ ॥ वर्णो भ्राता च द्वंद्वेऽनुपूर्वं क्रमेण पूर्वं प्रयोक्तव्यः । ब्राह्मणक्षत्रियौ । ब्राह्मणक्षत्रियविट्शूद्राः । भीमसेनार्जुनौ । रामलक्ष्मणौ । बलदेववासुदेवौ । युधिष्ठिरभीमसेनार्जुनाः ।

+समाऽनृतु ॥ ११७ ॥ भं नक्षत्रं ऋतुश्च समाक्षरं समानाक्षरमनुपूर्वं पूर्वं प्रयोक्तव्यं । अश्विनीभरणी । आर्द्राकृत्तिकाः । रोहिण्यः । हेमंतशिशिरौ । हेमंतशिशिरवसंताः । समाक्षरेति किं ? पुष्यपुनर्वसू । ग्रीष्मवसंता ।

+धर्मार्थादिषु वा ॥ ११८ ॥ धर्मार्थादिषु द्वंद्वेऽनयतः पूर्वनिपातो वा पूर्वं निपाति । धर्मार्थौ । अर्थधर्मौ । शब्दार्थौ । अर्थशब्दौ । कामार्थौ । अर्थकामौ । आद्यंतौ । अंतादी । गुणवृद्धी । वृद्धिगुणौ ।

+गुणश्लिष्टे पे ॥ ११९ ॥ गुणः श्लिष्टं विशेषणं च पे पूर्वं प्रयोक्तव्यं । चित्रगुः । श्वेतकर्णः । सर्वकेशः । शितिकंठः । बहुगुः । युवजानिः ।

वाहिताग्न्यादिषु ॥ १२० ॥ वाहिताग्न्यादिषु पेऽसंज्ञं पूर्वं निपातो वा पूर्वं निपाति । आहिताग्निः । अग्न्याहितः । पुत्रजातः । जातपुत्रः ।

एवं—दंतजातः । श्मश्रुजातः । घृतपीतः । भार्योढः । अर्थगतः । शीर्षच्छिन्नः ।

+प्रियः ॥ १२१ ॥ प्रियो वा बसे पूर्वं प्रयोक्तव्यः । प्रियगुडः । गुडप्रियः ।

+गड्वादय ईपः ॥ १२२ ॥ ईबंतात् गड्डुप्रभृतयो बसे वा पूर्वं प्रयोक्तव्याः । गड्डुकंठः । कंठगड्डुः । गड्डुशिराः । शिरोगड्डुः ।

+क्ताचार्त्ते ॥ १२३ ॥ बसे क्तादीभंताश्चास्त्रवाचि पूर्वं वा प्रयोक्तव्यं । उद्यतोऽसिरनेन—अस्युद्यतः । उद्यतासिः । खड्गोद्गीर्णः । उद्गीर्णखड्गः । वज्रहस्तः । हस्तवज्रः । चक्रपाणिः । पाणिचक्रः । करवालकरः । करकरवालः । ईबाकर्षणार्थः चशब्दः ।

+कालाकृतिसुखादयः ॥ १२४ ॥ कालवाचिनः आकृतिर्जातिस्तद्वाचिनः सुखादयश्च बसे क्तांताद् वा पूर्वं प्रयोक्तव्याः । मासयाताः । यातमासाः । सांगरजग्धी । जग्धसांगरा । सुखयाता । यातसुखा । दुःखयाता । यातदुःखा ।

क्तः ॥ १२५ ॥ क्तांतं बसे पूर्वं प्रयोक्तव्यं । ज्ञातविश्वः । व्याख्यातशास्त्रः । भिक्षितभिक्षः । अवमुक्तोपानत्कः । विश्रुतकीर्तिः ।

*ये कडारादयः ॥१२६॥ षसे कडारादयो वा पूर्वं प्रयोक्तव्याः । कडारमद्रः, मद्रकडारः । गडुलशाण्डिल्यः, शाण्डिल्यगडुलः । बधिरांधः, अंधबधिरः । नटधूर्तः, धूर्तनटः । कूटदाक्षिः, दाक्षिकूटः ।

उत्तरपदं [illegible] ॥ १२७ ॥ से यदुत्तरपदं तत् पुसंज्ञं भवति । दशागवधनः । व्याघ्रजातः । पूर्वप्रदेशाः "दिगधिकं सुहृदयो" इत्यादयः ।

इति जैनेंद्रव्याकरणे शब्दार्णवचंद्रिकानाम्नि लघुवृत्तौ प्रथमस्याध्यायस्य तृतीयः पादः ।

---

अथ प्रथमाध्याये चतुर्थः पादः ।

---

कर्मणीप् ॥ १ ॥ कर्मणि कारके इप् विभक्तिर्भवति । कटं करोति । जैनेंद्रं पठति । पायसं भुंक्ते । आदित्यं पश्यति । अहिं लंघयति ।

+हांतरांतरेणातिधिक्निकषासमयाभितोपाधौ ॥ २ ॥ हादिभिर्योगे इप् भवत्युपाधौ विशेषणे । हा देवदत्तं वर्द्धते व्याधिः । अंतरा गंधमादनं माल्यवंतं चोत्तराः कुरवः । अंतरा निषधं नीलं च विदेहाः । अंतरेण सौमनसं विद्युत्प्रभं च देवकुरवः । अंतरेण जलधिं हिमवंतं च भरतः । मोक्षमंतरेण नात्यंतिकं सुखं । अतिवृद्धं कुरून्महद्बलं । धिग्देवदत्तमयशः प्रवृद्धं । निकषा ग्रामं नदी । समया ग्रामं वनं । उपाधाविति किं ? प्रधाने व्याध्यादौ मा भूत् । चकारोऽनुक्तसमुच्चयार्थः । तेन— बुभुक्षितं न प्रतिभाति किंचित् । वृणीष्व भद्रे प्रतिभाति यस्त्वां ।

+पर्यभिसर्वोभयैस्तस्त्यैः ॥ ३ ॥ पर्यादिभिस्तस्यांतैर्योगे इप् भवति । परितो ग्रामं वनानि । अभितो ग्रामं । सर्वतो ग्रामं । उभयतो ग्रामं वनानि ।

+द्विरुक्तैरधोभिः ॥ ४ ॥ द्विरुक्तैरधोऽध्युपरिभिर्योगे इप् भवति । अधोऽधो ग्रामं । अध्यधि ग्रामं । उपर्युपरि ग्रामं ग्रामाः । द्विरुक्तैरिति किं ? अधो ग्रामस्य ।

*कालाध्वन्यभेदे ॥ ५ ॥ कालेऽध्वनि चोपाधौ इप् भवत्यभेदेऽत्यंतसंयोगे द्रव्यादिना । संवत्सरं क्षीरौदनं । शरदं मथुरा रमणीया । संवत्सरमधीते । क्रोशं शिकता । योजनं दीर्घो गिरिः । क्रोशमधीते । कालाध्वनीति किं ? स्थाल्यां पचति । अभेदे इति किं ? मासे मासस्य वा द्विरधीते ।

सिद्धौ भा ॥ ६ ॥ सिद्धौ क्रियाफलनिष्पत्तौ गम्यमानायां कालाध्वभ्यां भा भवत्यभेदे । मासेन प्राभृतमधीतं । क्रोशेन तर्कमधीतं । सिद्धाविति किं ? मासं काव्यमधीतं न च ज्ञातं ।

क्रियामध्ये केपौ ॥ ७ ॥ क्रिययोर्मध्ये कालाध्वभ्यां केपौ विभक्ती स्तः । अद्य भुक्त्वा मुनिः द्व्यहाद् भोक्ता, द्व्यहे भोक्ता । इहस्थोऽयमिष्वासः क्रोशात् क्रोशे वा विध्यति लक्ष्यं ।

*स्वती पूजायां तिः ॥ ८ ॥ पूजार्थे स्वतीशब्दौ तिसंज्ञौ स्तः । सुस्थाय गतः । अतिसिच्य गतः । पूजायामिति किं ? सुस्थित्वा गतः । काकुरियं ।

*न गिः ॥ ९ ॥ पूजार्थे सतीशब्दो गिसंज्ञो न स्तः । सुस्थितं भवता । अतिस्तुतं त्वया । गिनिमित्तं षत्वं नास्ति । पूजायामिति किं ? अतिषिक्तं किं तवात्र । कुत्सार्थोऽत्र ।

*अतिक्रमेऽतिर्गितिः ॥ १० ॥ अतिक्रमे आधिक्येऽतिर्गितिसंज्ञो न भवति । अतिसिक्तमेव भवता । अतिस्तुतमेव त्वया । अतिसिक्त्वैव गतः । गिसंज्ञाश्रयं षत्वं तिसंज्ञाश्रयः सविधिश्च नास्ति । अतिक्रमे इति किं ? अतिशय्य गतः ।

पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेऽपिः॥११॥ एतेष्वर्थेष्वपिर्गितिसंज्ञो न भवति । सर्पिषोऽपि स्यात् । बिंदुः स्तोकं मात्रा अपिशब्दार्थः । अपिस्तुयाद् राजानं । अपिस्तुहि । धिग्ब्राह्मणमपि स्तुयात् वृषलं । धिग्ब्राह्मणमपि सिंचेत् पलांडु । अपि सिंच । अपि स्तुहि ।

*व्यर्थौ पर्यपी ॥ १२ ॥ व्यर्थावनर्थांतरवाचिनौ पर्यपी गितिसंज्ञौ न भवतः । कुतः पर्यागतः । कुतोऽधिगत्य । पर्यानतं । गितिसंज्ञाश्रयः "प्राग्धोस्ते" इति प्रयोगनियमः सविधिर्णत्वं च न भवति ।

वीप्सेत्थंभूतलक्षणेऽभिनेप् ॥ १३ ॥ एष्वर्थेष्वभिना योगे इब् भवति गितिनिषेधश्च । वृक्षं वृक्षमभिसिंचति । साधुस्त्वं मातरमभिस्थितः । वृक्षमभिसजति ।

भागे चानुप्रतिपरिणा ॥ १४ ॥ भागेऽर्थे वीप्सादिष्वन्वादिभिर्योगे इब् भवति गितिसंज्ञानिषेधश्च । यदत्र मामनुस्यात् । मां प्रति स्यात् । मां परि स्यात् तद्दीयतां । वृक्षं वृक्षमनुसिंचति, प्रतिसिंचति, परिसिंचति । साधु त्वं मातरमनुस्थितः, प्रतिस्थितः । वृक्षमनुसजति, प्रतिसजति, परिसजति । भागे चेति किं ? परिषिंचत्योदनं ।

*भार्थेऽनुना ॥ १५ ॥ भार्थे हेत्वादावनुना योगे इब् भवति । ऋषभस्य प्रव्रज्यामनुप्राव्रजन् राजसहस्राणि । ज्ञानोत्पत्तिमन्वागमन् सुराः । शांतिनाथचीरितपदक्रमप्रसारणमनुप्रावर्षत् पर्जन्यः । तेन हेतुनेत्यर्थः । नदीमन्वसिता सेना । नद्या सहावसितेत्यर्थः ।

*उत्कृष्टे ॥ १६ ॥ अनुना योगे उत्कृष्टेऽर्थे इब् भवति । अनुपूज्यपादं वैयाकरणाः । अनुसमंतभद्रं तार्किकाः । अन्वकलंकदेवं शास्तारः ।

उपेन ॥ १७ ॥ उपेन योगे उत्कृष्टेऽर्थे इब् भवति । उपसिद्धनदिनं कवयः । उपाकलंकदेवं वादिनः । उपगौतमभद्रमन्याः । उपार्जुनं योद्धारः ।

*ईप् साधिके ॥ १८ ॥ उपेन योगे साधिकेऽर्थे ईप् भवति । उपखार्यां द्रोणः ।

*स्वेशेऽधिना ॥ १९ ॥ स्वे ईशितव्ये ईश्वरे च ईप् भवत्यधिना योगे । स्वे-अधिकुरुषु मेघेश्वरः । अधिमगधेषु श्रेणिकः । अधिमेघेश्वरे कुरवः । अधिश्रेणिके मगधाः ।

*काङाभिविधिमर्यादे ॥ २० ॥ आङा योगे का विभक्ती भवत्यभिविधिमर्यादयोः । आकुमारेभ्यो यशः समंतभद्रस्य । आपाटलिपुत्राद् वृष्टो देवः ।

वर्ज्येऽपपरिभ्यां ॥ २१ ॥ वर्ज्येऽर्थेऽपपरिभ्यां योगे का भवति । अपत्रिगर्तेभ्यो वृष्टो देवः । परित्रिगर्तेभ्यो वृष्टो देवः । परिपरित्रिगर्तेभ्यो वृष्टो देवः । वर्ज्ये इति किं ? अपशब्दो देवदत्तस्य ।

*यत्प्रतिमे प्रतिना ॥ २२ ॥ यतः प्रतिमा प्रतिदान यतश्च प्रतिमा प्रतिनिधिः सादृश्यं ततः प्रतिना योगे का भवति न गितिसंज्ञा च । माषानस्मै तिलेभ्यः प्रतियच्छति । अर्ककीर्तिर्भरततः प्रति ।

*चेष्टागतिकर्मण्यप्राप्तेऽचिपौ ॥ २३ ॥ चेष्टाक्रियायाः गतेः कर्मण्यसंप्राप्तेऽर्थेऽचिपौ विभक्ती स्तः । ग्रामाय गच्छति । ग्रामं गच्छति । नगराय व्रजति । नगरं व्रजति । चेष्टागतिकर्मणीति किं ? ग्रामादागच्छति । चेष्टाग्रहणं किं ? मनसा मेरुं गच्छति । गतिग्रहणं किं ? पचत्योदनं । अप्राप्त इति किं ? स्त्रियं गच्छति ।

संप्रदानेऽप् ॥ २४ ॥ संप्रदाने कारके अप् विभक्ती भवति । वज्रजंघाय श्रीमतीमदात् । त्रिपृष्ठाय स्वयंप्रभामदात् । श्रीविजयाय सुतारामदात् अमोघजिह्वाय भामशतमदात् । देवाय बलिं प्रयच्छति ।

+तादर्थ्ये ॥ २५ ॥ तादर्थ्ये अप् भवति । अवहननायोलूखलं । रंधनाय स्थाली ।

+क्लृप्यर्थैर्विकारे ॥ २६ ॥ क्लृप्यर्थैर्धुभिर्योग विकारेऽर्थेऽप् भवति। मूत्राय प्रकल्पते यवागू। श्लेष्मणे जायते दधि। तद्यवाग्वादिविकाररूपमापद्यते इत्यर्थ। विकार इति किं? सुकृतिन सद्यने शाल्य।

+ज्ञाप्येऽरिष्टेन ॥ २७ ॥ अरिष्टेन उत्पातेन ज्ञाप्येऽर्थे ज्ञाप्यमाने अप् भवति।

वाताय कपिला विद्युदातपायातिलोहिनी।
पीता वर्षाय विज्ञेया दुर्भिक्षाय सिता भवेत्॥

अरिष्टेनेति किं? मित्रस्येद छत्र।

*घ्यर्थवाचोऽर्थात् कर्मणि ॥ २८ ॥ घ्यर्थो वाग् यस्य तस्य धो कर्मण्यप् भवति तच्च घ्यर्थवागर्थात् न साक्षात् प्रयुक्त। एधेभ्यो व्रजति। पुष्पेभ्यो व्रजति। पाकाय व्रजति। पक्तये व्रजति। घ्यर्थवाच इति किं? प्रविश पिंडीं। अर्थादिति किं? एधानाहर्तु व्रजति।

*शक्तार्थनम.स्वास्तिस्वाहास्वधास्वधाहितैः ॥२९॥ शक्तार्थैर्नम प्रभृतिभिश्च योग अप् भवति। शक्ता जिनदत्तो देवदत्ताय। अल मल्लो मल्लाय। नमोऽभिनंदनदेवाय। स्वस्ति प्रजाभ्य। इंद्राय स्वाहा। वरडग्रय। स्वधा पितृभ्य। आमयाविने हित।

प्रगर्हे मन्यकर्मण्यजीवे वा ॥ ३० ॥ प्रकर्षेण गर्हे गम्यमाने मन्यते कर्मणि जीववर्जिते वा अप् भवति। न त्वा तृणाय मन्ये। न त्वा तृण मन्ये। न त्वा लोष्टाय मन्ये। न त्वा लोष्ट मन्ये। प्रग्रहण किं? काष्ठ त्वा मन्ये। गर्हे इति किं? इन्द्रनीलात् पद्मरागमधिकगुण मन्ये। मन्ये ग्रहण किं? न त्वा तृण चिंतयामि। अजीव इति किं? न त्वा श्वान मन्ये।

संज्ञो भा दे ॥ ३१ ॥ सपूर्वस्य जानाते कर्मणि या भा विभक्ती भवति दे। मात्रा सजानीते। मातर सजानीते।

*कर्तृकरणे ॥ ३२ ॥ कर्तरि करणे च कारके भा भवति। देवदत्तेन कृत। जिनदत्तेन मुक्त। विष्णुमित्रेण पीत। दात्रेण लुनाति। परशुना छिनत्ति। ध्यानेन कर्म भिनत्ति।

+प्रकृत्यादिभ्यः ॥ ३३ ॥ एभ्यो भा भवति। प्रकृत्या अभिरूप। प्रायेण वैयाकरण। गोत्रेण गार्ग्य। समेन धावति। विषमेण धावति। द्विद्रोणेन धान्य क्रीणाति। सहस्रेण अश्वान् क्रीणाति।

सहार्थेन ॥ ३४ ॥ सहार्थेन योगे भा भवत्युपाधौ। वत्सेन सह गौ। पुत्रेण सहागत। पुत्रेण सह स्थूल। पुत्रेण सह धनवान्। अर्थग्रहण पर्यायार्थं। पुत्रेण सार्द्ध साक सत्रा अमा युगपत् सम। पुत्रेण मुक्त—करणनिर्देशा।

येनांगिविकारेत्थंभावौ ॥ ३५ ॥ येनांगिनो विकारो विकृतत्वमित्थंभावोऽनेन प्रकारेण भवन च लक्ष्यते ततो भा भवति। पाणिना कुणि। पादेन खज। अक्ष्णा काण।

शिखया बटुमद्राक्षीत् श्वेतच्छत्रेण भूपतिं।
केशान् शखचक्राभ्यां त्रिभिर्नेत्रै पिनाकिन॥

अपि भवान् कमडलुना छात्रमद्राक्षीत्। अपि भवान् चूलया परिव्राजकमदर्शत्। छात्रत्वादिप्रकारमापन्नो मनुष्य कमडल्वादिना लक्ष्यते। अंगिविकारेत्थंभावो" इति किं? अक्षि काणमस्य।

हेतौ[1] ॥ ३६ ॥ हेत्वर्थे भा भवति। धनेन कुल। विद्यया यश। अन्नेन वसति। अध्ययनेन वसति।

+का ॥ ३७ ॥ हेतौ[2] का भवति। सिद्धिरनेकातात्। पर्वतोऽग्निमान् धूमवत्त्वात्।

*ऋणे ॥ ३८ ॥ हेतौ ऋणे का भवति। शताद्बद्ध। सहस्राद्बद्ध। निष्काद्बद्ध। हेतौ, इति किं? बद्धस्त्वया देवदत्तो नाह बध्नामि शत म धारयति शतेन बद्ध।

गुणे श्रीदत्तस्यास्त्रियां ॥ ३९ ॥ गुणे हेतौ श्रीदत्ताचार्यमतेन का भवत्यस्त्रिया। जाड्याद्बद्ध। जाड्येन बद्ध। ज्ञाना मुक्त। ज्ञानेन मुक्त। गुण इति किं? धनेन कुल। अस्त्रियामिति किं? बुद्ध्या मुक्त।

*हेतौ सर्वाः प्रायः ॥ ४० ॥ हेतुशब्दपर्या

1 लौकिकफलसाधनयोग्यपदार्थो हेतु। 2 पूर्वसूत्र २६। न तु ज्ञापक।

ये प्रकृते हेत्वर्थे तद्वाचिनः सर्वाः विभक्तयः प्रायेण भवंति । धनेन हेतुना वसति । धनाय हेतवे । धनाद्धेतोः । धनस्य हेतोः । धने हेतौ । कं हेतुं वसति । केन हेतुना । किं निमित्तं । केन निमित्तेन । किं कारण । केन कारणेन । किं प्रयोजनं । केन प्रयोजनेन । यं हेतुं वसति । येन हेतुना । येन निमित्तेन । एवं सर्ववचनेषु ।

काऽपादाने ॥ ४१ ॥ अपादाने कारके का विभक्ती भवति । रथात् पतितः । आचार्यादधीते । चौरेभ्यो बिभेति । अधर्माज्जुगुप्सते । माथुराः पाटलिपुत्रकेभ्य आढ्यतराः, अभिरूपतराः, दर्शनीयतराः ।

+प्यखे कर्माधारे ॥ ४२ ॥ प्यांतस्य खे कर्मण्याधारे च का स्यात् । प्रासादात् प्रेक्षते । आसनात् प्रेक्षते । अत एव वचनात् प्यखं द्रष्टव्यं । प्यख इति किं ? प्रासादमारुह्य प्रेक्षते । आसने उपविश्य प्रेक्षते । कर्माधार इति किं ? गृहादागत्याधीते ।

*दिक्शब्दान्यार्थाञ्चुदृत्याहीतराराद्वहिर्युक्ते ॥ ४३ ॥ दिक्शब्दैरन्यार्थैरञ्चुदृत्यादिभिश्च युक्ते का भवति । पूर्वो ग्रामात् । उत्तरो ग्रामात् । अन्यो देवदत्तात् । भिन्नो देवदत्तात् । प्राग् ग्रामात् । प्रत्यग् ग्रामात् । दक्षिणा ग्रामात् । दक्षिणाहि ग्रामात् । इतरोऽस्मात् । गृहादारात् क्षेत्र । बहिर्ग्रामात् ।

*ताऽतोऽर्थस्यैः ॥ ४४ ॥ अतसर्थैस्यैर्योगे ता भवति । दक्षिणतो ग्रामस्य । उत्तरतो ग्रामस्य । उपरि ग्रामस्य । उपरिष्टात् ग्रामस्य । परो ग्रामस्य ।

*इप् चैनेन ॥ ४५ ॥ एनेन योगे इप् ता च स्यात् । दक्षिणेन विजयार्द्धं वसति । उत्तरेण हिमवंत । पूर्वेण ग्रामस्य । उत्तरेण ग्रामस्य ।

*का चर्ते ॥ ४६ ॥ ऋते शब्देन योगे का स्यात् इप् च[1] । ऋते धर्मात् कुत सुखं । चित्रं यथाश्रयमृते । न क्षमं तिष्ठति रोगमृते ।

*पृथक्नाना भा च ॥ ४७ ॥ पृथग्नानाभ्यां योगे भा स्यात् का च । पृथक् देवदत्तेन । पृथग् देवदत्तात् । नाना गुरुदत्तेन । नाना गुरुदत्तात् ।

*विना तिस्रः ॥ ४८ ॥ विना योगे तिस्रो भक्तयो भवति । विना सम्यक्त्वेन । विना सम्यक्त्वात् । विना सम्यक्त्वं कुतो मुक्तिः ।

*स्तोकाल्पकृच्छ्रकतिपयात् करणे का वाऽसत्त्वे ॥ ४९ ॥ स्तोकादेरसत्त्ववचनात् करणे का वा स्यात् । स्तोकान्मुक्तः । स्तोकेन मुक्तः । अल्पान्मुक्तः । अल्पेन मुक्तः । कृच्छ्रान्मुक्तः । कृच्छ्रेण मुक्तः । कतिपयान्मुक्तः । कतिपयेन मुक्तः । असत्त्वे इति किं ? अल्पेन साधुना मत्त. । करणं इति किं ? अल्पं जल्पति ।

+तृप्तार्थैस्ता ॥ ५० ॥ तृप्तार्थैर्धुभिर्योगे करणे ता भवति । ओदनस्य तृप्यति । ओदनस्य तृप्तः । सक्तूनां पूर्यते । सक्तूनां पूरणः ।

*ज्ञोऽस्वार्थे ॥ ५१ ॥ जानातेरस्वार्थे अनवबोधने वर्तमानस्य करणे ता भवति । पयसो जानीते[1] । दध्नो जानीते । अस्वार्थे इति किं ? स्वनिना दुहितरं जानाति ।

*का चाराद्र्थैः ॥ ५२ ॥ आरादर्थैर्दूरार्थैरन्तिकार्थैश्चासत्त्ववाचिभिर्युक्ते का स्यात् ता च । दूरं ग्रामात् । दूरं ग्रामस्य । विप्रकृष्टं पर्वतात् । विप्रकृष्टं पर्वतस्य । अंतिकं वनात् । अंतिकं वनस्य । अभ्यासं देशात् । अभ्यासं देशस्य ।

*तेभ्यः केभाः ॥ ५३ ॥ तेभ्यः आरादर्थेभ्यः केभाः भवति । दूराद् ग्रामस्य । दूरं ग्रामस्य । दूरेण ग्रामस्य याति । अंतिकात् ग्रामस्य । अंतिकं ग्रामस्य । अंतिकेन ग्रामात् ।

*ईबाधारे च ॥ ५४ ॥ ईप् विभक्ति भवति आधारे कारके तेभ्यश्च ।

अपात्रे रमते लोको गिरौ वर्षति वासवः ।
अन्यस्त्रीषु मनो याति कुलस्त्रीषु न गच्छति ॥

१ शब्दप्रवृत्तिनिमित्तत्वाद् दिशि दृष्टः शब्दो गृह्यते तेन देशकालवृत्तिभिरपि पूर्वादिभिर्योगे का भवति । २ पर्याय निवृत्त्यर्थं इपो ग्रहणं । तेनेह न-ऋते देवदत्तस्य ।

१ पयसा करणभूतेन प्रवर्तते इत्यर्थः । सर्पिषा दध्ना वा । सर्पिषो रक्षणविषयो वा लक्षणेन सर्वं जानाति ।

वसीयसः श्रेयसश्च टो भवति पे। शोभन वसीयः श्वोवसीयस ते भूयाः । श्वःश्रेयसमस्तु ते।

ग्रामकौटात् तक्ष्णः ॥ १२० ॥ आभ्या तक्ष्णः टो भवति। ग्रामस्य तक्षा—ग्रामतक्षः। कुत्र्या भवः कौट ,कौटस्तक्षा कौटतक्षः।

शुनोऽतेः ॥ १२१ ॥ अतेः परस्य शुनः टो भवति । श्वानमतिक्रान्तोऽतिश्वः वराहः । सेवकश्च ।

*गौणात् ॥१२२॥ गौणादुत्तरस्य शुनष्टो भवति पे । व्याघ्र इव श्वा व्याघ्रश्व । सिंहश्वः ।

अजीवे ॥ १२३ ॥ अजीवे वर्तमानात् गौणात शुनष्टो भवति । आकर्ष. श्वा इव आकर्षश्वः । फलकश्वः । शकटश्वः । अजीव इति किं ? फालकश्वा ।

मृगोत्तरपूर्वाच्च सक्थ्नः ॥ १२४ ॥ एभ्यो गौणाच्च परात् सक्थ्नष्टो भवति । मृगस्येव सक्थि-मृगसक्थ । उत्तरस्येव सक्थि-उत्तरसक्थ पूर्वसक्थ । फलकमिव सक्थि फलकसक्थ ।

गोरद्रुपि ॥ १२५॥ गोशब्दाट्टो भवति अह्रुपि । पुगवः। राजगवः । पचगवप्रिय । दशाना गवा समाहारः-दशगव । गामतिक्रान्ता अतिगवी । अह्रुपीति किं ? पचभिर्गोभि क्रीतः पचगुः ।

नावो राद् ॥ १२६ ॥ नावताद् रसाद् टो भवति । द्वयोर्नावो समाहार द्विनाव । त्रिनाव । रादिति किं ? राजनौः ।

अर्द्धात् ॥ १२७ ॥ अर्द्धात् परात् नावष्टो भवति । अर्द्धनाव । अर्द्धनावी । अर्द्धनाव ।

खार्या वा ॥ १२८ ॥ खारीशब्दांतात् राट्टो भवति सांतः अर्द्धाच्च वा । द्वे खार्यौ समाहृते द्विखार,द्विखारि। पचखार, पचखारि । अर्द्धखार, अर्द्धखारि ।

द्वित्रेरजले: ॥ १२९ ॥ द्वित्रिपूर्वादजलेष्टो भवति । द्वयोरजल्योः समाहार द्व्यजल।त्र्यजल।

आयुष समाहारे ॥ १३० ॥ ताभ्यामायुष समाहारे टो भवति । द्वयोरायुषो समाहार द्व्यायुषं । त्र्यायुष।समाहार इति किं ? द्व्यायुः प्रियः।

*पुरुषात् ॥ १३१ ॥ अस्मात् परादायुष टो भवति पे । पुरुषस्यायुः पुरुषायुष ।

ब्रह्मणो राष्ट्रेभ्य ॥१३२॥राष्ट्रवाचिभ्य परात् ब्रह्मणष्टो भवति से।सुराष्ट्रेषु ब्रह्मा सुराष्ट्रब्रह्मः।अवतिब्रह्मः । राष्ट्रेभ्य इति किं ? देवब्रह्मा नारदः।

कुमहद्भ्यां वा ॥१३३॥ आभ्या ब्रह्मणष्टो वा स्यात् । कुत्सितो ब्रह्मा कुब्रह्मः, कुब्रह्मा । महाब्रह्मः, महाब्रह्मा ।

*द्विस्तावात्रिस्तावागोष्ठश्वा ॥ १३४ ॥ एते वा निपात्यते । द्विस्तावती । त्रिस्तावती । द्विस्तावाः वेदि । त्रिस्तावाः वेदिः। अन्त्ये ती-शब्दस्य ख । गोष्ठे श्वा गोष्ठश्व । अतुसातः।

*प्रत्यनुसमोऽक्ष्णो हे ॥ १३५॥ प्रत्यादेः परादक्षिशब्दाद् हसे टो भवति । अक्षिणी प्रति प्रत्यक्ष।अनुगतमक्ष्णः-अन्वक्ष।समीपमक्ष्णः समक्ष

शरदादेः ॥ १३६ ॥ अस्माट्टो भवति हे । शरदः समीपमुपशरद । प्रतिशरद । उपमनस । अनुदिश ।

*जराया डश्च ॥१३७॥ जराशब्दातात् टो भवति डश्चादेश । जरायाः समीपमुपजरस । प्रतिजरस ।

अन ॥ १३८ ॥ अन्नताट्टो भवति हे । आत्मन्यधि अध्यात्म । उपराज । प्रत्यात्म ।

नपो वा ॥ १३९ ॥ अन्नताद् नपो हे टो वा स्यात् । चर्मणः समीपमुपचर्म । उपचर्म । प्रतिचर्म । प्रतिचर्म ।

*नद्यगिरिपौर्णमास्याग्रहायण्या ॥१४०॥

शयाधनाद् टो वा स्यात् हे । उपकुम । उपकुप् । प्रतिसमिध । प्रतिसमित् । गिरेर्मेदिः बहिर्गिर । बहिर्गिरि । उपपौर्णमास । उपपौर्णमासि । उपाग्रहायण । उपाग्रहायणि ।

*नद्याः ॥ १४१ ॥ नदीशब्दान्ताट्टो वा स्यात् । उपनद । उपनदि ।

*स्ये ॥ १४२ ॥ स्यिपूर्वायाः नद्याः टो भवति हे।पञ्च नद्यः समाहृताःपञ्चनदं।सप्तनदं।

*गोदावर्याः ॥१४३॥ स्यिपूर्वाद् गोदावरीशब्दात् टो वा स्यात्। द्विगोदावर।सप्तगोदावर।

*सरजसोपशुनानुगवं ॥ १४४ ॥ एते टान्ता निपात्यते हसे । सह रजसा सरजसमभ्यवहरति । शुनोंतिकमुपशुनमास्ते। टे वस्योत्व। गवामन्वायत अनुगवं यानं ।

स्वाङ्गाद्धेऽक्षिसक्थ्नः ॥ १४५॥ स्वाङ्गवाचकाद् अक्ष्णःसक्थ्नश्च बसे टो भवति। विशाले अक्षिणी अस्य-विशालाक्षः । कल्याणाक्षः । गौरे सक्थिनी अस्य गौरसक्थः।स्वक्षी।अतिसक्थी। स्वाङ्गादिति किं ? स्थूलाक्षिरिक्षुः । ब इति किं वामाक्षि ।

द्रुण्यङ्गुले ॥ १४६ ॥ द्रुणि दारुविषये अङ्गुलेर्बसे टो भवति । द्वे अङ्गुली अस्य-द्व्यङ्गुल । त्र्यङ्गुल । चतुरङ्गुल दारु ।

*द्वित्रेर्मूर्ध्नो वा ॥१४७॥ द्वित्रिभ्यां मूर्ध्नः टो वा स्याद् बसे । द्विमूर्धः।द्विमूर्धा । त्रिमूर्धः । त्रिमूर्धा ।

*प्रधानङ्स्त्रीप्रमाण्योर ॥१४८॥ प्रधानभूता या ङन्ता स्त्रीप्रमाणीशब्दश्च तदन्ताद् धाद् अत्यो वा स्यात्।कल्याणी पञ्चमी आसां कल्याणीपञ्चमा रात्रयः । कल्याणीपञ्चा भार्याः । स्त्री प्रमाणी येषां ते स्त्रीप्रमाणाः कुटुम्बिनः । प्रधानग्रहण किं ? कल्याणी पञ्चमी यस्मिन् कल्याणीपञ्चमीकः पक्षः ।

*भान्नेतुः ॥१४९॥ भवाचिनः परात् नेतृशब्दादत्व स्यात् । मृगो नेता आसां मृगनेत्रा रात्रयः।पुष्यनेत्राः।भादिति किं? दत्तनेतृक सैन्य ।

*लोम्नोऽन्तर्बहिर्भ्यां ॥ १५०॥आभ्यां परात् लोम्नः अत्व स्यात् बसे । अन्तर्गतानि लोमान्यस्य अन्तर्लोम । बहिर्लोमः ।

नञ्बहोर्ऋचो माणवचरणे ॥ १५१ ॥ नञ्बहुभ्यां परात् ऋक्शब्दात् अत्यो भवति यथासख्य माणवे चरणे च वाच्ये । न विद्यते ऋचोऽस्य अनृच माणवकः । बह्वृचो ब्राह्मणः। माणवचरण इति किं?अनृक्क साम।बह्वृक्क सूक्त।

*नाभे खौ ॥१५२॥ नाभ्यन्ताद् बसादत्यो भवति खौ । हिरण्य नाभौ यस्य हिरण्यनाभ । पद्मनाभः । ऊर्णनाभ ।

*नञ्व्युपत्रेश्चतुर ॥ १५३ ॥ एभ्यः परात् चतुःशब्दात् अत्व स्यात् बसे।अहृदयानि चत्वारि येनासौ अचतुरः । विगतानि चत्वारि यस्य विचतुर । समीपे चतुर्णां उपचतुर । त्रयो वा चत्वारो वा त्रिचतुराः ।

सो ॥ १५४ ॥ सुपूर्वाच्चतुरोऽत्व स्यात् । शोभनानि चत्वारि यस्यासौ सुचतुरः ।

प्रातर्दिनाश्वसः ॥ १५५॥ सुपूर्वाद् प्रातरादेरत्व स्यात्।शोभन प्रातरस्य सुप्रात ।सुदिवः सुश्व ।

प्रोष्ठण्यजात्पद ॥१५६॥ प्रोष्ठादेः पर पदो निपात्यते । प्रोष्ठस्येव पादावस्य प्रोष्ठपद ।एणीपद । अजपदः । अत्ये पद्भावः ।

चतु शारेरश्रिकुक्षे ॥१५७॥चतु शारिपूर्वाभ्या आश्रिकुक्षिभ्यामत्व स्यात् । चतस्रोऽश्रयोऽस्य चतुरश्र । शारिरिव कुक्षिरस्य शारिकुक्ष ।

नञ्दु सोःसक्थिहलेर्वा ॥ १५८ ॥ नञादिपूर्वाभ्यां सक्थिहलिभ्यां अत्यो वा स्यात् ।

न विद्यते सक्थ्यस्य-असक्थः।असक्थिः।दुःसक्थः। दुःसक्थि। सुसक्थः। सुसक्थिः। अहलः। अहलिः। दुर्हलः। दुर्हलिः। सुहलः सुहलिः।

*अस् प्रजायाः ॥१५९॥ नञादिपूर्वाद् प्रजाशब्दादस् स्यात्। न विद्यते प्रजा अस्य अप्रजाः। अप्रजसौ। अप्रजसः। दुःप्रजाः। सुप्रजाः।

*मंदाल्पाच्च मेधायाः ॥१६०॥ आभ्यां परात् नञादिपूर्वाच्च मेधाशब्दात् अस् स्यात् बसे। मंदमेधाः। अल्पमेधाः। अमेधाः। दुर्मेधाः। सुमेधाः।

धर्मात् केवलादन् ॥ १६१॥ केवलो धर्मशब्द एव यत्रोत्तरपदं तदंताद् बसात् अन् स्यात्। साधूनामिव धर्मोऽस्य साधुधर्मा। क्षत्रियधर्मा। अनंतधर्मा। केवलादिति किं? परमः स्वो धर्मोऽस्य परमस्वधर्मः।

सुहरिततृणसोमाज्जंभात् ॥ १६२ ॥ स्वादिपूर्वाद् जंभादन् स्यात्। शोभनो जंभो यस्य सुजंभा। हरितजंभा। तृणजंभा। सोमजंभा। स्वादेरिति किं? चारुजंभः।

दक्षिणेर्मा लुब्धयोगे ॥ १६३ ॥ दक्षिणेर्मेति अनंतो निपात्यते लुब्धेन योगे।दक्षिणं अंगं ईर्म व्रणं वाऽस्य व्याधेन दक्षिणेर्मा मृगः। लुब्धयोग इति किं? दक्षिणेर्मः पशुः।

*संप्राज्जानोर्ज्ञुज्ञौ ॥१६४॥ संप्राभ्यां परस्य जानुशब्दस्य ज्ञुज्ञावादेशौ स्तः। संगते जानुनी अस्य-संज्ञुः। संज्ञः। प्रगते प्रकृष्टे वा जानुनी अस्य-प्रज्ञुः। प्रज्ञः।

वोर्ध्वात् ॥ १६५ ॥ ऊर्ध्वात्परस्य जानुनस्तौ वा स्तः। ऊर्ध्वे जानुनी अस्य-ऊर्ध्वज्ञुः। ऊर्ध्वज्ञः। ऊर्ध्वजानुः।

जायाया निङ् ॥ १६६ ॥ जायाशब्दस्य निङ् भवति। युवतिर्जाया अस्य-युवजानिः।

*भृतिरयान्मासाट्ठः ॥१६७॥ भृतावर्थे विहितात् स्यात् परान्मासात् ठो भवति। पंच भृतिरस्य पंचकः।पंचको मासोऽस्य पंचकमासिकः। विंशकमासिकः। भृतित्यादिति किं? सुमासः।

*सुपूत्युत्सुरभेर्गुणे गंधस्येः ॥१६८॥स्वादिभ्यःपरस्य गुणवाचिनःगंधस्य बसे इकारादेशो भवति। शोभनो गंधोऽस्य सुगंधिः। पूतिगंधिः। उद्गंधिः। सुरभिगंधिः। स्वादेरिति किं? तीव्रगंधो हिंगुः। गुण इति किं? शोभनगंधास्तगरादयोऽस्य सुगंधः आपणिकः।

*वाऽल्पे ॥ १६९ ॥ अल्पार्थे वर्तमानस्य तस्येर्वा स्यात्।घृतस्य गंधोऽल्पमस्मिन् घृतगंधिः। घृतगंधः ओदनः। सूपगंधिः। सूपगंधः।

*वोपमानात् ॥१७०॥उपमानादुत्तरस्य गंधस्येर्वा स्यात्। पद्मस्येव गंधोऽस्य पद्मगंधिः। पद्मगंधः। उत्पलगंधिः। उत्पलगंधः। करीषगंधिः। करीषगंधः। पुनर्वाग्रहणमुत्तरत्र निवृत्त्यर्थं।

खं पादस्याहस्त्यादेः ॥ १७१ ॥ हस्त्यादिवर्जितादुपमानादुत्तरस्य पादस्य खं भवति। व्याघ्रस्येव पादावस्य व्याघ्रपात्। सिंहपात्। पादस्येति किं? व्याघ्रमुखः। अहस्त्यादेरिति किं? हस्तिपादः। अश्वपादः। महिषपादः। दासीपादः।

सुस्न्यादेः ॥ १७२ ॥ स्वादेः स्यादेश्च तस्य खं स्यात् बसे। शोभनौ पादावस्य सुपात्। द्विपात्। त्रिपात्। चतुःपात्।

कुंभपद्यादिः ॥ १७३ ॥ एते निपात्यंते। कुंभ इव पादावस्य कुंभपदी। एकपदी। शूकरपदी। गोधापदी। सूचीपदी।

वयसि दंतस्य दतृ ॥ १७४ ॥ वयसि गम्यमाने स्वादेः स्न्यादेश्च परस्य दंतस्य दतृ इत्ययमादेशः स्यात्। सुजाता दंता अस्य सुदन्। द्विदन्। त्रिदन्। चतुर्दन्। पंचदन्। षोडन्।

चतुर्दती गौः । वयसीति किं ? चतुर्दन्तो हस्ती ।

स्त्रियां खौ ॥ १७५ ॥ स्त्रियां दंतस्य दतृ स्यात् खौ । अय इव दंता अस्याः-अयोदती । फालदती । स्त्रियामिति किं ? वज्रदतः । खाविति किं ? समदंती ।

वा श्यावारोकात् ॥ १७६ ॥ आभ्यां परस्य दन्तस्य दतृ वा स्यात् खौ । श्यावा श्यामलिताकाराः दंता अस्य-श्यावदन् । श्यावदंतः । अरोकाः निर्दीप्तयो निश्छिद्रा वा दंता अस्य-अरोकदन् । अरोकदंतः ।

शुद्धाग्रांतशुभ्रवृषवराहाहिमूषिकात् ॥ १७७ एभ्यः परस्य दंतस्य दत्रादेशो भवति वा बसे । शुद्धा दंता अस्य शुद्धदन् । शुद्धदंतः । कुड्मलाममिव दंता अस्य-कुड्मलाग्रदन् । कुड्मलाग्रदंतः । शिखराग्रदन्, शिखराग्रदंतः। शुभ्रदन्, शुभ्रदतः । वृषदन् वृषदतः, । वराहदन् , वराहदंतः । अहिदन्, अहिदतः । मूषिकदन् मूषिकदन्तः ।

ककुदस्यावस्थायां खं ॥ १७८ ॥ ककुदस्य खं भवत्यवस्थायां । असंजात ककुदमस्य असजातककुत् । पूर्णककुत् । अवस्थायामिति किं ? श्वेतककुदः ।

त्रिककुद्गौ ॥ १७९ ॥ त्रिककुदिति निपात्यते अद्रावभिधेये । त्रीणि ककुदान्यस्य त्रिककुद् गिरिः । त्रिककुदोऽन्यः ।

व्युदः काकुदस्य ॥ १८० ॥ आभ्यां परस्य काकुदस्य खं स्यात् । विशिष्ट काकुद ताल्वस्य-विकाकुत् । उत्काकुत् ।

पूर्णाद् वा ॥१८१ ॥ पूर्णाद् परस्य खं वा स्याद् । पूर्णं काकुदमस्य पूर्णकाकुत् । पूर्णकाकुदः ।

*खरखुराभ्यां नासिकायाः खौ ॥१८२॥ खरखुराभ्यां परस्य नासिकाशब्दस्य नस् भवति खौ । खरस्येव नासिकास्य-खरणाः । खुरणाः । खाविति किं ? खरनासिकः ।

*नसोऽस्थूलाच्च ॥ १८३ ॥ स्थूलवर्जितान्मृदः ताभ्यां च परस्य नासिकायाः नसो भवति खौ । द्रु इव नासिकास्य-द्रुणसः। वार्द्धीणसः । गोनसः । खरणसः । खुरणसः । अस्थूलादिति किं ? स्थूलनासिका ।

गेः ॥ १८४ ॥ गेः परस्याः तस्याः नसो भवति । उन्नता नासिकास्य-उन्नस । प्रणसं मुखं ।

वेः खुरग्राः ॥ १८५ ॥ विपूर्वायाः तस्याः खुरग्राः आदेशाः भवति । विगता नासिकास्य विखुः । विखः । विग्रः ।

सुहृद्दुर्हृन्मित्रामित्रे ॥ १८६ ॥ एतौ निपात्येते मित्रामित्रे चाभिधेये । शोभन हृदयमस्य-सुहृत् मित्रं । पाप हृदयमस्य दुर्हृदमित्रं । हृदयस्य हृद् । मित्रामित्र इति किं ? सुहृदयः साधुः । दुर्हृदयः खलः ।

*धनुःखौ ॥ १८७ ॥ धनुः शब्दः खावेव प्रयोक्तव्यो बसे । शतं धनूंष्यस्य शतधनुः । दृढधनुः । पुष्पधनुः । खाविति किं ? गाडीवधन्वा । सारंगधन्वा ।

*स्त्रियामूधसोऽनङ् ॥ १८८ ॥ स्त्रिया वर्तमानस्योधसोऽनङ् स्यात् । कुंडमिवोधोऽस्याः कुंडोध्नी । घटोध्नी गौः । पीवरोध्नी । स्त्रियामिति किं ? महोधाः पर्जन्यः ।

*इन कप् ॥ १८९ ॥ इन्नतात् कप् भवति स्त्रियां । बहवो दंडिनोऽस्यां बहुदंडिका । बहुछात्रिका । बहुवाग्मिका शाला ।

*उर प्रभृतेः ॥ १९० ॥ उर प्रभृतिभ्यः कप् स्यात् । व्यूढमुरोऽस्य-व्यूढोरस्क । महोरस्कः । चित्रोपानत्कः । प्रभूतसर्पिष्कः । सलक्ष्मीको जिनः ।

×नञोऽर्थात् ॥ १९१ ॥ नञ्पूर्वादर्थात् कप् स्यात् । नास्त्यर्थो यस्यानर्थकं । नञ इति किं ? व्यर्थं ।

+पुंस्पयोनड्वन्नौलक्ष्म्य एकार्थे ॥ १९२ ॥ एभ्य एकार्थे एकत्वे कप् स्यात् । प्रियः पुमानस्याः-प्रियपुंस्का । प्रियपयस्कः । प्रियानडुत्कः । प्रियनौकः । प्रियलक्ष्मीकः । एकार्थ इति किं ? द्विपुंस्कः । द्विपुमान् । बहुलक्ष्मीकः। बहुलक्ष्मीः ।

ऋन्मोः ॥ १९३ ॥ ऋकारांतान्मुसंज्ञाच्च कप् स्यात् । बहुभर्तृका स्त्री । बहुमातृकः । बहुकुमारीकः । बहुवामोरूकः ।

येपाद्वा ॥ १९४ ॥ यस्य सांतो विधिर्न विहितस्तस्माद् येपात् कब्वा स्यात् । बहुखट्वाकः । बहुखट्वकः । बहुखट्वः । बहुमालाकः, बहुमालकः, बहुमालः। येपादिति किं ? वृकपात् ।

*ईयसः ॥ १९५ ॥ ईयसंतात् कप् न भवति । बहुश्रेयान् । विद्यमानश्रेयसी । बहुश्रेयसी पुरुषः ।

खौ ॥ १९६ ॥ खौ विषये कप् न भवति। बहुदेवदत्तः । विश्वदेवो ग्रामः ।

नसहादेस्तुल्ये ॥ १९७ ॥ तुल्ये यो वर्तते सहशब्दः तदादेः कप् न स्यात् । सपुत्रः आगतः । सपुत्रः स्थूलः । सहादेरिति किं ? श्वेताश्वकोऽयमागतः । तुल्य इति किं ? सह विद्यमानानि लोमान्यस्य लोमकः ।

स्तुतौ भ्रातुः ॥ १९८ ॥ स्तुत्यर्थे भ्रातुः कप् न स्यात् । सुभ्राता । दर्शनीयभ्राता । कल्याणभ्राता । स्तुताविति किं ? दुर्भ्रातृकः ।

नाडीतंत्र्योः स्वांगे ॥१९९॥ आभ्यां स्वांगे कप् न स्यात् । बहुनाडी जंघा । बहुतंत्री ग्रीवा । स्वांगे इति किं ? बहुनाडीकः स्तंबः । बहुतंत्रीका वीणा ।

निष्प्रवाणिः ॥ २०० ॥ निष्प्रवाणिरिति कबंतं निपात्यते । निर्गता प्रवाणी तंतुवायशलाका अस्मान्निःप्रवाणिः पटः कंबलो वा ।

च इच् ॥ २०१ ॥ चार्थे इच् स्यात् । केशाकेशि । कचाकचि । मुशलामुशलि ।

द्विदंड्यादिः ॥२०२॥ द्विदंड्यादयः इजंताः साधवो भवंति । द्वौ दंडौ अस्मिन् प्रहरणे द्विदंडि । उभादंडि । त्रिदंडि । उभादंति घ्नंति । उभांजलि पिबंति । उभयाबाहु प्रहरति ।

इति श्रीशब्दार्णवापरनाम्नि जैनेंद्रमहाव्याकरणे शब्दार्णवचंद्रिकायां लघुवृत्तौ चतुर्थाध्याये द्वितीयपादः ।

## तृतीयः पादः ।

आदेरेकाचो द्वे ॥ १ ॥ आदेरेकाचः द्वे रूपे भवतः इत्याधिकृतं वेदितव्यं वक्ष्यति—लिड्यङ्-काचि धोः” इति । तेन धोरादेरेकाचः द्वे रूपे भवतः । पपाच । जुहोति । अपीपचत् । आदेरिति किं ? जजागार । अनाद्यस्य ऋकारस्य माभूत् ।

+सुपः ॥ २ ॥ सुब्धोर्यस्य कस्यचिदेकाचो द्वे स्तः । इत्यधिकृतं ज्ञेयं । वक्ष्यति—सन्यङोः । पुपुत्रीयिषति । पुतित्रीयिषति । पुत्रीयियिषति ।

अचः ॥ ३ ॥ धोः सुब्धोश्चादेरचः परस्यैकाचो द्वे भवतः । अटाट्यते । अशिशिषति, अधीयियिषति । अधीयियिषति ।

न रफादौ न्द्रोऽयि ॥ ४ ॥ रफादौ वर्तमाना आदेरचः परे नकारदकाररेफसंयोगा न द्विरुच्यंते अयकारे परतः । इन्दिदिषति । अड्डिडिषति । अर्चिचिषति । उब्जिजिषति । रफादाविति किं ? अरिरिषति । न्द्र इति किं ? ईचिक्षिषते । अयीति किं ; अरार्यते । अचः

इति किं ? विद्यासति ।

+चस्यैके ॥ ५॥ चसंज्ञकस्य द्वे न स्त इत्येके। लोलूयिषते । अस्त्येवेत्यपरे । लुलोलूयिषते ।

+यकस्तृतीयस्य ॥६॥ यगंतस्य धोस्तृतीयस्यैकाचो द्वे स्तः। कंडूयियिषति। असूयियिषति ।

+ईर्ष्यः ॥ ७ ॥ ईर्ष्यतेस्तृतीयस्यैकाचो द्वे स्तः । ईर्ष्यियिषति । ऐर्ष्यियत् ।

+सनो वा ॥ ८ ॥ ईर्ष्यतेः सनंतस्य तृतीयस्यैकाचो द्वे वा स्तः । ईर्ष्यिषिषति। ईर्ष्यियिषति।

थः ॥९॥ ते द्वे समुदिते थसंज्ञे स्तः। ददति। दधति । अददुः । थप्रदेशाः थविलेरित्यादयः ।

जक्षादिः ॥ १० ॥ जक्षित्यादयः थसंज्ञका भवंति । जक्षति । जाग्रति । दरिद्रति । चकासति । शासति ।

पूर्वश्चः ॥ ११ ॥ द्विरुक्तयोः पूर्वोऽवयवः चसंज्ञो भवति। पपाठ । पापठ्यते । अपीपठत् । चप्रदेशाः चस्योवादयः ।

लिड्यच्कचि धोः ॥ १२ ॥ लिटि ङचि चनि च परतः धोः सुब्धोरचादेरच परस्य चैकाचो द्वे स्तः ।पपाच। प्रोर्णुनाव। बिभेति ।आटिटत्, आशिश्रीयत् । लिड्यच्कचीति किं ? पाद्रात् । धोरिति किं ? ईहांचक्रे ।

सन्यङोः ॥ १३॥ सनंतस्य यङतस्य च द्वे रूपे भवतः । अटिटिषति । अटाट्यते । चिकीर्षति । चेक्रीयते ।

+चिक्लिदचक्नसदाश्वत्साह्वन्मीढ्वत्॥१४॥ एते निपात्यंते । चिक्लिदः । चक्नसः । क्वचे द्वित्वं । दाश्वान् । धघसौ इट् द्वित्वाभावश्च । साह्वान् । सहेर्मेर्घिरिदो दीर्घत्वमद्वित्वमनिट्त्वं च । मीढ्वान् । मिहेरद्वित्वमनिट्त्वमुणो दीर्घत्वं ढत्वं च ।

+यशयंरसतोऽत्याचस्य ॥ १५॥ वंदादिनामध्ये द्वित्वं वा स्यात् चस्य चाक् । वदावदः ।

वदः।चराचरः।चरः।चलाचलः।चलः।पतापतः।पतः।

+घनाघनपाटूपटौ ॥१६॥ एतौ वा निपात्यौ । घनाघनः । हंतेराचि घत्वं द्वित्वं च । चस्य चागागमः । घनः । पाटूपटः । पाटेरचि णेरुप् द्वित्वं चस्याकोऽपवादः ऊगागमो दीर्घत्वं च ।

*लिट्यभ्यण: साचोऽज्याऽऽज्यं॥१७॥ आज्या इत्येतस्मात् पूर्वस्य धोर्लिटि चस्य साचो यणः इग् भवति अरेफयकारपरस्य । सुष्वाप । सुष्वपिथ । उवाच । उवचिथ । इयाज । इयजिथ । उवाय । उवयिथ । उवास । उवसिथ । विव्याध । विव्यधिथ । विव्याच । विव्याचिथ । जिज्यौ । जिज्यिथ । आर्थे इति किं?विव्याथ । आज्यमिति किं?सस्याम ।

*न वो यः॥१८॥ वेञो यकारस्य लिटि इग् न भवति । ऊयतुः । ऊयुः ।

*वा ॥१९॥ वेञो यकारस्य लिटि वा नेग् भवति । ऊयतुः । ऊयुः । ऊवतुः । ऊवुः ।

व्ये च॥२०॥ वेञः व्ये लिटि चेग् न भवति । ववाय । ववतुः । ववुः । वविथ ।

ज्य: ॥२१॥ ज्या इत्येतस्य धोः व्ये इग् न भवति । प्रज्याय । उपज्याय ।

व्य: ॥२२॥ व्येञः व्ये नेग् भवति । संव्याय । उपव्याय ।

परेर्वा ॥२३॥ परेः परस्य व्येञः व्ये नेग् वा स्यात् । परिव्याय । परिवीय ।

*स्वपस्यमव्याटे: किति ॥२४॥ स्वप्यमोः व्यादीनां च किति साचो यण इग् स्यात् । सुप्तः । सुप्तवान् । सुप्त्वा । सुप्तिः । उप्तः । उप्तवान् । उप्त्वा । ऊर्ति: । मूतः । मूतवान् । उदितः । उदितवान् । उदितः । उदितवान् । उदित्वा । उदितिः । इष्टः । इष्टवान् । इष्ट्वा । इष्टिः । उप्तः । उप्तवान् । उप्त्वा उप्तिः । ऊढः । ऊढवान् । ऊढ्वा ।

ऊढि॰। उत । उतवान्। उत्वा। उति ।सवीत । सवीतवान्। सवित्वा। सवीति। हूत ।हूतवान्। हूत्वा। हूति । क्रितीति किं ? स्वप्त ।

*वशिव्यधिव्यचिज्याग्रहिव्रश्चिमच्छभ्रस्जा क्ङिति ॥ २५॥ वश्यादीना किति ङिति चेग् भवति। उशित.। उशितवान्। उष्ट। उशति। विद्ध। विद्धवान्। विध्यति। विचित। विचितवान्। विचति। जिनाति। जीनः। जीनवान्। जीयते। गृहीतः। गृहीतवान्। गृह्णाति। वृश्चति। वृक्णः। वृक्णवान्। पृष्टः पृष्टवान् पृच्छति। भृष्टः। भृष्टवान्। भृज्जति। क्ङितीति किं? विव्येचि। वर्यीति किं? वृश्च्यते।

कचि स्वापे ॥ २६॥ स्वापेः कचीग्भवति असूषुपत्। असूषुपतां। असूषुपन्। कचीति किं? स्वाप्यते।

*न श्वेः ॥ २७॥ श्वयतेः कचीग् न भवति। आशिश्वियत्। आशिश्वियतां। अशिश्वियन्।

*वशो यङि ॥ २८॥ वशेर्यङीक् न भवति। वावश्यते। वावश्येते। वावश्यते। यङीति किं? उशति।

*स्वपस्यम्व्य. ॥ २९॥ एषां यङीग् भवति। सोषुप्यते। सेसिम्यते। वेवीयते।

चायः की ॥ ३०॥ चायतेः यङि परतः कीत्ययमादेशो भवति। चेकीयते, चेकीयेते। चेकीतः। चेकीयः।

*ह्वस्ये ॥ ३१॥ यसज्ञानिमित्ते स्ये ह्वयते रिग् भवति। जुहुपति। जोहूयते। जुहाव।

*णौ सन्कचोः ॥ ३२॥ सन्पङ्गे कच्परे च णौ ह्वयतेरिग् भवति। जुहावयिपति। अजूहवत्। अजूहवत। अजूहवन्।

न वा श्वेः ॥ ३३॥ श्वयतेः सन्कच्परे णौ न वग् भवति। शुशावयिपति। शिश्वयिपति। अशूशवत्। आशिश्वियत्।

लिड्यङो ॥ ३४॥ श्वयतेर्लिटि यङि च न वेग् भवति। शुशाव। शुशुवतुः। शुशुवुः। शिश्वाय। शिश्वियतुः। शिश्वियुः। शोशूयते। शेश्वीयते।

प्यायः ॥ ३५॥ प्यायीङो लिड्यङोरिग् भवति। आपिप्ये। आपिप्याते। आपेपीयते। आपेपीयेते।

*तेऽगेः ॥ ३६॥ गिहीनस्य प्यायः इग् भवति तसज्ञके परतः। पीनं मुखं। पीनावर्णौ। पीनौ स्तनौ। पनिवतौ स्तनौ। त इति किं? प्यायते। अगेरिति किं? प्रप्यानमूधः।

*आङोऽधौ ॥ ३७॥ आङः परस्य प्यायः इग् भवति अधावर्थे। आपीनोंऽधु। आपीनमूधः। आपीनवानधूः। आपीनवदूधः। आङ इति किं? प्रप्यानमूधः। अंधाविति किं? आप्यानश्चद्रमाः।

*स्फायः ॥ ३८॥ स्फायतेरिग् भवति ते परतः। स्फीतः। स्फीतवान्।

*प्रभाच स्त्यः ॥३९॥ प्रपूर्वस्य स्त्यायतेरिग् भवति ते परतः। प्रस्तीतः। प्रस्तीतवान्। प्रस्तीमः। प्रस्तीमवान्। प्रभाच इति किं? संस्त्यानः। संस्त्यानवान्।

*द्रवमूर्तिस्पर्शे श्यः ॥ ४०॥ द्रवमूर्तौ स्पर्शे च श्यकः इग् भवति ते परतः। शीनं घृतं। शीतं तोयं। द्रवमूर्तिस्पर्श इति किं? संश्यानो वृश्चिकः। शीतेन गतः संकुचितो वा।

प्रतेः ॥ ४१ ॥ प्रतिपूर्वस्य श्यायतेस्ते इग् भवति। प्रतिशीनः। प्रतिशीनवान्।

*वाभ्यवभाचः ॥ ४२॥ अभिअवपूर्वस्य श्यायतेस्ते इग् वा भवति। अभिशीनं। अभिश्यानं। अभिशीनवान्। अभिश्यानवान्। अवशीनं। अवशीनवान्। अवश्यनः। अवश्या-

नवान् । अभ्यवशीनः । अभ्यवश्यानः ।

*हविःक्षीरे शृतं पाके ॥ ४३ ॥ श्राश्राप्योः क्ते शृभावो निपात्यते हविःक्षीरयोः पकार्थे । शृतं हविः । शृतं क्षीरं । हविःक्षीर इति किं ? श्राणा यवागूः । श्रपिता यवागूः ।

एचोऽश्याः ॥ ४४ ॥ एजंतस्य धोरात्वं भवति आशिति परतः । दाता । दातुं । दातव्यं । अवदाता । अवदातुं । अवदातव्यं । म्लाता । म्लातुं । म्लातव्यं । अशीति किं ? यपति । अव-यति । म्लायति ।

*व्योऽलिटि ॥ ४५ ॥ व्येञः आ भवत्य-लिटि परतः । संव्याता । संव्यातुं । संव्यातव्यं । उपसंव्यानं । अलिटि इति किं ? विव्याय । विव्ययिथ ।

स्फुरिस्फुल्योर्घञि ॥ ४६ ॥ अनयोर्घञि आ भवत्येचः । विष्फारः । विस्फारः । विष्फा-लः । निस्फालः ।

*वाऽप्यपगुरः ॥ ४७ ॥ अपगुरीकः एचः आ वा स्यात् अभिपरे । अपगारमपगारं । अपगोरमपगोरं ।

*दीङः सनि ॥ ४८ ॥ दीङः आ वा स्यात् सनि परतः । दिदासते । दिदीषते ।

प्ये च ॥ ४९ ॥ दीङो नित्यमा भवति प्ये चैज्विषये च । उपदाय । उपदाता । उपदात-व्यं । प्ये चेति किं ? अवदीयते ।

*मिमीमीगोरखाचि ॥ ५० ॥ अनयोरा भवति खल्यमचं च मुक्त्वा प्ये एज्विषये च । निमाय । निमाता । निमातुं । निमातव्यं । प्रमाय । प्रमाता । प्रमातुं । प्रमातव्यं । असार्चीति किं ? ईषन्निमयः । दुष्प्रमयः । निमयः । आमयः ।

*वा लीङ्लिनात्योः ॥ ५१ ॥ असाच्यनयो-रा वा स्यात् प्ये चाविलाय, विलीय । विलाता । विलेता । विलातुं, विलेतुं । विलातव्यं । विलेतव्यं ।

असाचीति किं ? ईषल्लयः । विलयः ।

*अर्चादौ णौ ॥ ५२ ॥ अर्चादिष्वर्थेषु लीङ्-लिनात्योः णौ नित्यमा भवति । जटाभिरा-लापयते । श्येनो वर्तिकामपलापयते । लोक-मुल्लापयते ।

क्रीङ्जेः ॥ ५३ ॥ एषामेचो णौ भात्वं स्यात् । क्रापयति । अध्यापयति । जापयति ।

सिध्यतेरज्ञाने ॥ ५४ ॥ सिध्यतेरा भवत्य-ज्ञानेऽर्थे णौ परतः । अन्नं साधयति । अर्थं साधयति । अज्ञान इति किं ? आचारः कुलं सेधयति । क्षमा धर्मं सेधयति ।

चिस्फुरोर्वा ॥५५॥ चिञस्फुरश्च णौ आ वा स्यात् । चापयति, चाययति धर्मं । स्फारयति स्फोरयति धनुः ।

प्रजने वेतेः ॥ ५६ ॥ प्रजनेऽर्थे वेतेर्णौ आ वा स्यात् । पुरो वातो गाः प्रवापयति । प्रवाय-यति । लवणं गाः प्रवापयति । लवणं गाः प्रवाययति ।

*बिभेतेर्दे ॥ ५७ ॥ बिभेतेर्णौ आ वा भवति दविषये । मुंडो भापयते । जटिलो भापयते । मुंडो भीषयते । द इति किं ? कुंचिकयैनं भाययति ।

ईतः पुग् नित्यं ॥ ५८ ॥ ईकारांतस्य बिभेतेर्दे णौ नित्यं पुगागमो भवति । जटिलो भीषयते ।

स्मिङः ॥ ५९ । दे णौ परतः स्मिङः आत्वं स्यात् । मुंडो विस्मापयते । जटिलो विस्माययते ।

झल्यकिति सृजदृशोऽम् ॥ ६० ॥ झला-दावकिति परतः सृजिदृशोरमागमो भवति । स्रष्टा । स्रष्टुं । स्रष्टव्यं । स्रक्ष्यति । द्रष्टा । द्रष्टुं । द्रष्टव्यं । द्रक्ष्यति । अकीति किं ? सर्जनं

दर्शन। अकितीति किं? स्रष्टः। दृष्टः।

*स्पृशादिसृपो वा ॥६१॥ स्पृशादीनां सृपेश्च झल्यकिति अम् वा भवति। स्प्रष्टा। स्पर्ष्टा। म्रष्टा। मर्ष्टा। क्रष्टा। कर्ष्टा। त्रप्ता। तर्प्ता। द्रप्ता। दर्प्ता। स्रप्ता। सर्प्ता।

*धात्वादेः ष्णोऽष्ठ्याष्ठिव्ष्वष्कः स्नं ॥६२॥ धोरादौ षकारणकारयोः सकारनकारादेशौ स्तः ष्ठ्यादीन् वर्जयित्वा। सहते। नयति। नश्यति। धात्वादेरिति किं? षोडन्। लषति। भणति। अष्ठ्यादेरिति किं? ष्ठ्यायति। निष्ठीवति। ष्वष्कते।

*व्योः खं वल्क्यौ ॥६३॥ वकारयकारयोः खं भवति वलि क्यौ च परतः। देदिवः। देदिमः। सेसिवः। सेसिमः। ऊयी—ऊतं। क्नूयी—क्नूतं। क्ष्मायी-क्ष्मात। ऋद्धः। भोभूः। वल्क्यौ इति किं? सेव्यते

हल्ङ्याब्भ्यः सुसिप्त्यनच् ॥ ६४ ॥ हलंतात् ङी चाप् च यो दीर्घस्तदंताच्च सुसिप्ति-पामनचां खं भवति। तक्षा। उखास्रत्। कुमारी। गौरी। प्रतिमा। बहुराजा। अभिनस्त्व। अछि-नत्त्वं। अबिभर्भवान्। अजागर्भवान्। हल्-ङ्याब्भ्य इति किं? जिनः। लक्ष्मीः। क्षीरपाः। निष्कौशांबिः। अतिखट्वः। सुसिप्तीति किं? अभैत्सीत्। अनजिति किं? भिनत्ति।

केरेङः ॥६५॥ एङन्तात्परस्य केः स भवति। हे मुने। हे साधो। एङ इति किं? हेगौः।

मात् ॥ ६६ ॥ मादुत्तरस्य केरनचः खं भवति। भोः स्रुघ। हे जिनदत्त।

पिति कृति तुक् ॥ ६७ ॥ मातस्य तुगागमो भवति पिति कृति परतः। अग्निचित्। प्रस्तुत्य। पिति कृति इति किं? चितं गुरुषु। मस्येति किं? प्रत्य। ग्रामणीः।

सधौ ॥६८॥ संधावित्यधिकारो वेदितव्यः। संश्लेषः संनिकर्षो वा संधिरिति लोकत एव ज्ञेयः। वक्ष्यति "अचीको यण्,, दध्यशान। संधाविति किं? दधि अशान।

संहितैकपदे नित्या नित्या धातूपसर्गयोः।
नित्या समासे वाक्ये तु सा व्यपेक्षामपेक्षते॥१

छेऽचः ॥६९॥ अचः छे परतः तुगागमो भवति। गच्छति। इच्छति। पृच्छति।

आङ्माङोः ॥ ७० ॥ अनयोस्तुग् भवति छे परतः। आच्छादयति। आच्छिनत्ति। माच्छै-त्सीत्। माच्छिदत्। ङकारः किं? आछत्रमान-यति आछत्रं। उपमाछत्रं। उपमाछत्रमानयति।

*दीं वा पदस्य ॥ ७१ ॥ पदस्य संबंधिनो दस्छे वा तुक् स्यात्। बदरीच्छाया। कुवलीच्छाया। द इति किं? श्वेतच्छत्रं। पदस्येति किं? ह्रीच्छति म्लेच्छति। अपच्छायते।

*पस्य ॥ ७२ ॥ पदस्य संबंधिनो दीसंज्ञस्य स्थाने यः पस्तस्य तुग्वा स्यात् छे परतः। हे इंद्रभूते उच्छत्रमानय। हे इंद्रभूते उछत्रमानय।

अचीको यण् ॥ ७३ ॥ अचि परे इकः यण् भवति।

त्वं दुध्यशान मदन मध्वपनय रागवर्द्धनं धीर।
पित्रर्थः परिहार्यो राजकुले लाकृतिस्त्याज्या॥

एचोऽयवायाव् ॥ ७४ ॥ एचोऽचि परे अयादयो भवति। नयनं। पवनं। रायौ। नावौ।

+गव्यूतिरध्वमाने ॥ ७५ ॥ गोरव् निपा-त्यते अध्वपरिमाणे यूतौ परतः। गव्यूतिः। अध्वमान इति किं? गोयूतिः।

व यि त्ये ॥ ७६ ॥ वकारांतो य आदेशः स यथास्थानं भवत्येचो यकारादौ त्ये परतः। गव्यति। नाव्यति। स्थानिमद्ग्रहणं किं? स्येयति। रैयति। मित्यं इति किं? गोभ्यां। त्य इति किं? गोयानं।

*धोस्तत्रैव ॥ ७७ ॥ धोर्यकारत्वानिमित्तम्यै वैचो वकारातादेशो भवति । हव्य । लव्यं । अवश्यलाव्य । अवश्यपाव्य । धोरिति किं ? मृन्नियमो मा भूत् । बाभ्रव्यो गय । नाव्य । तत्रैवेति किं ? उपोयते ।

क्षिज्यो शक्तौ॥७८॥शक्त्यर्थे क्षिज्योरेचोऽय् भवति । क्षेतु शक्य क्षय्यः । जय्य शत्रु । शक्ताविति किं ? क्षेय । जेय ।

क्रय्य स्वार्थे ॥ ७९ ॥ क्रीणातेरेचः स्वाऽर्थेऽय् निपात्यते यरेव परे । क्रय्या गौ । क्रय्यः कबल । क्रेयमन्यत् ।

द्वयोरेक ॥ ८० ॥ द्वयो पूर्वपरयोरेको भवतीत्ययमधिकारो ज्ञेयः । वक्ष्यत्यादेप्–देवेंद्रः ।

तद्वत् ॥ ८१ ॥ तयोरिव तद्वत् । तयोः पूर्वपरयो यत् कार्यं तत्कृतेऽप्येकादेशे यथा स्यात् । वामोरु इति मृत् । ऊरित्यमृन्मृदमृदोरकादेशः मृद्वद्भवति।तथा च स्वादिविधि । अन्यथा-वृक्षादा वेव स्यात् । देवाविलत्र सुबौकारः । असुबकार । तयोरेकादेश सुब्वद्भवति । तथा च सुबत पदमिति साधुः। अन्यथा साधु पूज्य इत्यादावेव स्यात् । अधीत्य,प्रेत्येत्यत्र परवद्भावाद् भम्य तुक् ।

आदेप् ॥ ८२ ॥ अवर्णातादच्येप् भवति । सेय । गधोदक । परमर्द्धिः । तवल्कारः । आदिति किं ? दध्यृण ।

एच्यैप् ॥ ८३ ॥ अवर्णातादेचि पर एव्भवति । सैषा । समौषधिः । तवैश्य । वरौषध ।

*इणेधूठि ॥ ८४ ॥ अवर्णातादैब्भवति एधु परत । उपैति । प्रैधते । धौत । धौतवान् । एत्तीति किं ? प्रेतः ।

+अक्षादूहिण्यां ॥ ८५ ॥ अक्षादैब्भवत्यूहिण्या परत । अक्षौहिणी सेना ।

स्वादीरीरे ॥ ८६ ॥ स्वादैब्भवति ईरीरयो परतः । स्वैरी । स्वैरिणी । स्वैरः ।

*प्रादूहोढोढ्येष्यैष्ये ॥ ८७ प्रादैप् भवत्यूहादिषु परतः । प्रौहः । प्रौढः । प्रौढिः । प्रैषः । प्रैष्यः । ऊहादिषु इति किं ? प्रोतः ।

।भवृगार्णकबलवसनवत्सतरादृणे ॥८८॥ ऋणे परतः ऐप् भवति प्रादिभ्यः । प्रगत ऋण प्रार्णं । दशार्णं । ऋणार्णं । कबलार्णं । वसनार्णं । वत्सतरार्णं ।

+ऋते भासे ॥ ८९ ॥ ऋते परे अवर्णांतादैप् भवति भासे । सुखार्त । ऋत इति किं सुखेतः । भास इति किं ? परमर्त्तः ।

*अटश्च धौ ॥ ९० ॥ अटश्चैब्भवति अजादौ धौ परत । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यत् । औमत् । औभिष्यत । औमीत् । चकारो नियमार्थ अट ऐवेव नान्यत् । औंकारमैच्छत् औंकारीयत् । औदयत् ।

ऋत्यैप् गेः ॥ ९१॥ अवर्णांताद्गेरैप् भवति ऋकारादौ धौ परतः । मार्च्छति । उपार्च्छति । प्रार्ध्नोति । ऋतीति किं ? उपेतः । गेरिति किं ? नर्छति ॥ ।

*वा सुपि ॥ ९२ ॥ गेरवर्णांतादैप् भवति ऋति सुपि धौ परे वा । प्रार्षभीयति । प्रर्षभीयति । उपार्कारीयति । उपर्कारीयति ।

तधेङि परः ॥ ९३ ॥ गेरवर्णांताद् एकारादौ धौ परतः परादेशो भवति । द्वयोरेकः । तथा सुब्धौ तु वा । प्रेषयति । उपेलयति । उपोषति । प्रोषति । उपेलकीयति । उपैलकीयति । उपोदनीयति । उपौदनीयति । एङीति किं ? उपायते ।

+एवेऽनियोगे ॥ ९४ ॥ अवर्णांतादेवे परतः परादेशो भवत्यनियोगे । क्वेव यासि । इहेव तिष्ठ । अनियोगे इति किं ? अत्रैव तिष्ठ ।

× वोष्ठौतौ से ॥ ९५ ॥ अवर्णादोष्ठौत्वोः परतःसे वा परो भवति।बिंबोष्ठी,बिंबौष्ठी।स्थूलोतुः, स्थूलौतुः।से इति किं ? पश्योष्ठं। अद्यौतुं पश्य।

×सीमंतः केशे ॥ ९६ ॥ सीम्नोऽन्ते परः निपात्यः केशविषये। सीमंतः। केश इति किं ? सीमांतो ग्रामः।

ओमाङोः ॥ ९७ ॥ अवर्णांतात् परो भवत्योमाङोः परतः। का ओमित्यवोचत्। कोमित्यवोचत्। सोमित्यवोचत्। आ—ऊढा। ओढा।अद्य ओढा-अद्योढा।कदा ओढा-कदोढा। सा ओता—सोता। सा ओढा—सोढा।

*उस्यपदे ॥ ९८ ॥ अवर्णांतादुसि परतः परो भवति अपदे। अभिदुः। अयुः। अदुः। अपद इति किं ? कोषा नेमे।

एप्यतः ॥ ९९ ॥ अकारस्य परो भवत्येप्यपदे परतः। पचे। पठंति। एपीति किं ? अपचे। अत इति किं ? यांति।

*डाजहोऽन्त इतौ ॥ १००॥ डाजेहस्याच्छब्दस्य परो भवतीतौ परतः।छमत् इति-छमिति। घटिति। डाजह इति किं ? जगदिति आह। अत इति किं ? घपिदिति।इताविति किं ? पटदत्र।

*न म्रेः ॥ १०१ ॥ म्रिसंज्ञकस्यातः इतौ परतः परो नास्ति। पटपटदिति। म्रेरिति किं ? पटिति।

*तः ॥ १०२ ॥ म्रिसंज्ञकस्य यस्तकारः स परो भवति इतौ परे। पटत्पटेति।

म्रौ डाचि ॥ १०३ ॥ डाजंते म्रौ परे तकारः परो भवति। पटपटाकरोति। दमदमा भवति। छमछमास्यात्।

+ऋत्पुर्वो ऋः ॥१०४॥ ऋति ऌति वा उः ऋर्पणस्य ऌवर्णस्य च ऋर्वा भवति। पितृषभः पितृर्षभः। पितृऋषभः। पितृकारः। पितृॢकारः पितृॢकारः ऋतीति किं ? आत्रार्थः।

स्वेऽको दीः ॥ १०५ ॥ अकः स्वेऽचि परे दीर्भवति। देवाग्रे। विद्यांतः। दधीदं। मुनीशः। साधूदितं। वधूदरं। मातॄकारः। होतॄ ॡकारः। होतॄकारः। स्व इति किं ? दध्यशान।

*सुटीदुतः माक्स्वं ॥ १०६ ॥ पूर्वस्याकः इदुतः स्वं दीर्भवति अजादौ सुटि परतः। मुनी। साधू। सुटीति किं ? गुरून्। इदुत इति किं ? शुद्धे।

शसि ॥ १०७ ॥ माक्स्वं दीर्भवति शसि परतः। मालाः। बुद्धीः। गौरीः।

*न्पुंसि ॥ १०८ ॥ पुंसि शसो नकारादेशो भवति। कवीन्। जिनान्। मुनीन्। साधून्।

पूर्वोऽमि ॥ १०९ ॥ अकः सुप्यमि परतो द्वयोरेकः पूर्वो भवति। जिनं। मुनिं। साधुं। बुद्धिं। धेनुं। वधूं। नदीं। सुटीति किं ? अचिनवं।

*पदेङ्त्येङः ॥ ११० ॥ एङः पदांतादकारादौ पदे परतः परः पूर्वो भवति। मुनेऽत्र। साधोऽत्र। पद इति किं?नयनं।लवनं। अतीति किं ? ते इह।

ङसङस्योः ॥ १११ ॥ एङः परयोः ङस्ङसि इत्येतयोरति परतः परः पूर्वो भवति। मुनेः स्वं। मुनेरागच्छति। धोः स्वं।धोरायाति।

ऋत उः ॥११२॥ ऋकारांतात् ङसङस्योरति उर्भवति द्वयोरेकः।पितुःस्वं। पितुरागच्छति।

*ख्यत्योऽतः ॥ ११३ ॥ ख्य त्य इत्येताभ्यामनच्काभ्यां परस्य ङसङस्योरत उर्भवति। सख्युः। पत्युः स्वमागच्छति वा। ख्यत्य ग्रहणं किं ? मुख्यस्य। मुख्यात्। अपत्यस्य। अपत्यात्।

*हशि रेः ॥ ११४ ॥ अतः परस्य रेः हशि परे उर्भवति। को हसति। धर्मो जयति।

दर्शाति किं ? वश्चित् । रेरीति किं स्वयोहि । भन इति किं ? मुनिर्भृते । देवा यांति ।

*भति ॥ ११५ ॥ अनो रेरुर्भवति भकारे परे । सरेज्ञोऽग्नि । अनीति किं ? स एषः ।

*गोरेङ् ॥ ११६ ॥ गोरेङ् पदे अति परतः एङ् वा स्यात् । गो अग्र, गोग्र, गवाग्र । गोरिति किं ? धोऽग्र । एङ् इति किं ? चित्रग्वग्र ।

—अवोऽनक्षेऽचि ॥ ११७ ॥ गोरेङः अवा देशो भवति वा अक्षवर्जिते चि परे । गवाग्र, गोग्र । गवेश्वर, गवीश्वर । गवर्ण । गव्हण । अनक्ष इति किं ? गो अक्ष गोक्ष । पदे इति किं ? गवे—गवा ।

*इन्द्रे ॥ ११८ ॥ गोरेङ अवो भवति इन्द्रे परत । गवेन्द्र ।

।वातायनेऽक्षे ॥ ११९॥ वातायनेऽर्थे गोरेङः अवो भवत्यक्षे परत । गवाक्ष । वातायन इति किं ? गो—अक्ष—गोक्ष ।

*पान्तानितौ ॥१२०॥ पमङ्गकादितिशब्द-वर्जितेऽचि परे यदुक्तं तन्न भवति । भो देव दत्ता ३ इदमानय।अनितावितिं किं ? सुमगला ३ इति । सुमगलेति ।

*देः ॥ १२१ ॥ दिसञ्ज्ञकाद् यद् प्राप्नोति तन्नास्त्यचि परतः । मुनी अत्र । पटू इमौ । द्वे इमे । अमी अश्वा ।

*वेकोऽसेऽस्वे प्रः ॥१२२॥ इक अस्वेऽचि परतः प्रो वा भवत्यसे पदे । दधि अत्र।दध्यत्र। नदि एषा । नद्येषा । मधु इद । मध्विद । इक इति किं ? मुनयाचर अत्र । असे इति किं ? मध्वानन । नद्युदक । पद इति किं ? नद्यौ । कन्वौ । अस्व इति किं ? नदीय ।

ऋत्यकः ॥ १२३ ॥ अकः ऋकारे लकारे च वा प्रो भवति । मह ऋषि । महर्षि ।खट्व ऋत्स्य । खट्वर्स्य । धूलि ऋतु, धूल्यृतुः । वधु ऌग । वध्लृग । कर्तृ ऋतः । कर्तृतः । कन्य ऌकार । कन्यल्कारः । ऋतीति किं ? ददाम । अक इति किं ? स्याता वृक्षे ।

*दिवो हल्युत् ॥ १२४ ॥ दिवः पदस्य हलि परे उद् भवति । धुम्या । धुभिः । धुम्यः। धुषु । हलीति किं ? दिवौकस ।

*तोऽनञ्मे सात्सोः स्व ॥ १२५ ॥ तका-रस्थानिन सकारात् सो ख भवति हल्यनन्ते । स ददाति । एष रक्षति । अनञ्स इति किं ? असो गच्छति । अनेषो गच्छति।सादिति किं ? सकः पचति । एषको हसति । हलीति किं ? सोऽर्थ । एषोऽत्र ।

*तदोऽङ्घिपूर्तो ॥ १२६ ॥ तत्स्थानिन स-कारात् सो ख भवत्यचि परत पादपूरणे । सैष दाशरथी रामः सैष राजा युधिष्ठिरः । सैष कर्णो महात्यागी, सैष पार्थो धनुर्धर ॥ अङ्घिपूर्ताविति किं ? स एष भवतो राजा योऽन्याय्ये पथि वर्तते ।

—क्रीङ्तन्यवस्यादेः प्राय ॥ १२७ ॥ अव-गेरादे ख भवति क्रीङ्तन्योः परत प्रायः । वक्रयः । अवक्रय । वततः । अवततः ।

।धाञ्नह्योः ॥ १२८॥ अपेरादेः ख भवति धाञ्नह्योःप्रायः।पिहित।अपिहित।पिनद्ध।अपिनद्ध।

सम्पर्युपात् कुः सुट भूषे ॥ १२९॥ समा-दिभ्य परस्य कुञः सुड् भवति भूषाधे । सम्स्क रोति । समस्करोत् । सचस्कार । परिष्करोति । परिचस्कार । उपस्करोति बाल । उपास्करोत् । उपचस्कार कन्या । भूष इति किं ? उपकरोति ।

समवाये ॥ १३० ॥ सम्पर्युपात् कृञ सम वायेऽर्थे सुट् भवति । तत्र नः संस्कृत । सस्कृतो मरिचैर्यूपः ।

उपात् प्रतियत्नवैकृतवाक्याध्याहारे

॥ १३१ ॥ उपात् कृञ सुडागमो भवति प्रतियत्नाद्यर्थे । एधो दकस्योपस्कुरुते । उपस्कृत भुंक्ते । उपस्कृतं जल्पति ।

किरतेर्लवे ॥ १३२ ॥ उपात् किरते सुट् भवति ल्वे ल्वनार्थे । उपस्कार मद्रका लुनंति। लव इति किं ? उपकिरति धान्य धाक ।

वधे प्रतेश्च ॥ १३३ ॥ प्रतेरुपाच्च किरते वधेऽर्थे सुट् स्यात् । प्रतिस्कीर्णं उपस्कीर्णं ह ते वृषल भूयात् । वध इति किं ? प्रतिकीर्णं बीज।

* चतुष्पदपक्षर्षात् ॥ १३४ ॥ अपात् किरते सुट् भवति हर्षाच्चतुष्पदर्थे । अपस्किरते वृषभो हृष्ट । चतुष्पदीति किं ? अपाकिरति बालो हृष्ट । हर्षादिति किं ? अपकिरति श्वा।

*विश्रुति भक्ष्याश्रयार्थे ॥१३५॥ अपात् किरतेःसुट् भवति वौ श्रुति च भक्ष्याश्रयाय चेत् । अपस्किरते कुक्कुटो भक्ष्यार्थी । अपस्किरते श्वा आश्रयार्थी ।

*विष्किरो वौ वा ॥१३६॥ विकिरतेः कत्ये वावर्थे सुट् वा निपात्यः । विष्किरः । विकिरः शकुनिः ।

*प्रातुपेर्गवि ॥१३७॥ प्रात्परस्य तुपतेर्गवि गम्यमाने सुट् भवति । प्रस्तुपति गौः । गवीति-किं ? प्रतुपति स्त्री ।

*कुस्तुम्बुर्वास्पदाश्चर्यापस्करापस्करावरस्परमस्करमस्करितस्करबृहस्पतिरथस्पा जाति प्रतिष्ठाद्भुतनर्थकरणयागक्रियासातत्यवेणुपारिव्राट्चौरदेवतानदीषु ॥ १३८ ॥ कुस्तुम्बुरुप्रभृतयः ससुट्का निपात्यते जात्यादिष्वर्थेषु । कुस्तुम्बुरुः धान्याकतृणजातिः । आस्पद प्रतिष्ठा । आश्चर्यमद्भुतं । अवस्करोऽनर्थः । अपस्करो रथावयवः । अपस्करा भुक्ते क्रियासातत्ये । मस्करो वेणुः। मस्करी परिव्राजकः। तस्करश्चौरः। बृहस्पतिर्देवता । रथस्पा नदी । अन्यत्र—कुतुंबुरुःवृक्षः।आपद । आचर्यं मत । अवकरः । अपकरः।अवरपर । मकरो ग्राहः । मकरी समुद्रः। तत्करः । बृहत्पतिः । रथपाः ।

*प्रस्कण्वहरिश्चंद्रावृषी ॥१३९॥ एतौ ससुट्कौ निपात्यौ ऋषी चेत् । प्रस्कण्व । हरिश्चंद्र ऋषि । प्रकण्वो देश । हरिचंद्रो राजाऽन्यत्र ।

*पारस्करो देशे ॥१४०॥ पारात् करे सुण्निपात्यते देशे गम्यमाने । पारस्करो देशः । पारकरोऽन्य ।

*नगरे ॥१४१॥ नगरे च पारस्करो निपात्यते । पारस्करो नगर ।

*कास्तीराजस्तुदास्कथ ॥ १४२ ॥ एषां घोः सुण्निपात्यते नगरे । कास्तीर । अजस्तुद । आस्कथं। अन्यत्र—कातीर । अजतुद । आकथ ।

*कारस्कर ॥१४३॥अस्य घोः सुण्निपात्य । कारस्कर नगर । कारकरमन्यत् ।

*वृक्षे ॥१४४॥वृक्षे च कारस्कर निपात्यते । कारस्करो वृक्षः । कारकरोऽन्यः ।

*करस्करोऽद्रौ च ॥ १४५ ॥ करस्करो निपात्योऽद्रौ वृक्षे च । करस्करो गिरिर्वृक्षश्च । करकरोऽन्यः ।

*निष्कादयः ॥ १४६ ॥ निष्कुप्रकाराः ससुट्का निपात्यते । किमष्कौ मल प्रमाणे । किष्कुः वितस्तिः हस्तो वा । किष्किंधः पर्वतः । किमो द्वित्वमखे। वनस्पति । प्रायश्चित्तमित्यादि ।

*श्रिताश्रितप्रमाणे गोष्पद ॥ १४७ ॥ एष्वर्थेषु गोः परस्य पदस्य घोः सुट् षत्व च निपात्य । गोष्पदो देशः—गोभिः सेवित । गोष्पदमरण्य तैरसेवित । गोष्पदपूर वृष्टो देवः । गोपदमन्यत्र ।

धावनुप ॥ १४८ ॥ घौ अनुपेति प

एतद् द्वयमन्तरेण ज्ञेय । पञ्चमि-षष्ठ्याः स्तो कादेः । स्तोकान्मुक्तः । पाविति किं ? निःस्तोकः । मागो पावधिकारः । अनुरधिकारश्च आवा गहादेशात् ।

पायाः स्तोकादे ॥१४९॥ स्तोकादिभ्यः परस्याः पाया अनुप् भवति । स्तोकान्मुक्तः कतिपयान्मुक्तः । अल्पान्मुक्तः । अन्तिकादागतः अभ्यासादागतः । दूरादागत । विप्रकृष्टादागत । कृच्छ्राल्लब्ध । स्तोकादेरिति किं ? वृकाद् भय वृकभय ।

ब्राह्मणाच्छंसी ॥ १५० ॥ अत्र पानुप् निपात्यः । ब्राह्मणाच्छंसी ।

ट ओजःसहोऽम्भस्तमोऽञ्जसः ॥१५१॥ एभ्यो भेरनुप् भवति । ओजसाकृत । सहसाकृत । अम्भसाकृत । तमसावृत । अञ्जसाकृत ।

पुंसानुजजनुषान्धौ ॥ १५२ ॥ एतौ कृतटा नुपौ निपात्यौ । पुंसानुजा कन्या । जनुषा जन्म नाध जनुषान्धः ।

दव्यात्मन ॥ १५३ ॥ डडते यौ परे आत्मन टोऽनुब्भवति । आत्मनापञ्चमः । आत्मनाषष्ठ ।

* मनसश्चाज्ञायिनि ॥१५४॥ मनःशब्दा दात्मनश्चाज्ञायिनि परे टानुब्भवति । मनसाज्ञायी । आत्मनाज्ञायी ।

खौ ॥१५५॥ मनसष्टानुब्भवति खुविषये । मनसागुप्ता । मनसागता ।

* डेः परात्मनः ॥ १५६ ॥ परात्मभ्यां डेरनुब्भवति खौ । परार्थं पद परस्मैपद । परस्मैभाषः । आत्मनेपद । आत्मनेभाषः । परात्मन इति किं ? तद्धितं ।

ईपोऽद्धलः ॥ १५७ ॥ अदन्तात् हलन्ताच्च परस्या ईपोऽनुप् भवति । वनेहरिद्रकाः । कूपेपिशाचकाः । त्वचिसारः । दृषदिमाषकः । अद्धल इति किं ? नद्यांकुक्कुटिका । हलिति किं ? अक्षशौण्डः ।

*कारे भाचां हलि ॥ १५८ ॥ अद्धल्भ्यां ईपोऽनुप् भवति हलादौ भाचा देशे कारविषये । हलेद्विपदिका । समिधिमाषक । कार इति किं ? अभ्याहितपशु । भाचामिति किं ? यूथपशुः । हलीति किं ? अविकटोरणः ।

मध्यान्ताद् गुरौ ॥ १५९ ॥ मध्यान्ताभ्यां ईपोऽनुप् भवति गुरौ यौ परतः । मध्येगुरुः । अन्तेगुरुः ।

अत्रामेऽमूर्धमस्तकात स्वाङ्गाद् ॥ १६० ॥ मूर्धमस्तवर्जिताद् स्वाङ्गात् अत्रामे यौ परतः ईपोऽनुप् भवति । कण्ठेकालः । उरसिलोमा । उदरेमणिः । शिरसिशिखः । अकाम इति किं ? मुखे कामोऽस्य मुखकामः । अमूर्धमस्तकादिति किं ? मूर्धशिखः । मस्तकशिखः । स्वाङ्गादिति किं ? पानशौण्ड ।

*बन्धे घत्रि वा ॥ १६१॥ अदन्ताद्धीपोऽनुम्भवति वञाती घञन्ते परे । हस्तेबन्धः । हस्तबन्धः । चक्रेबन्धः । चक्रबन्धः । घञीति किं ? चक्रबद्धः ।

घे कृति बहुलं ॥ १६२॥ अदन्तात् घसे कृदन्ते यौ बहुल ईपोऽनुप् भवति । प्रवाहेमूत्रित भस्मनिहुत । उदधेनिर्गीर्ण । पात्रेसमिताः । क्वचिन्न भवति-ग्रामरागः । क्वचिद विभाषा । सरसिरुह, सरोरुह । क्वचिदन्यदेव-हृदय स्पृशतीति हृदिस्पृक् । घ इति किं ? धन्वनि कार गोऽस्य धन्वकारः । कृतीति किं ? घट्रभूतः ।

+षयोनिमतिचरेऽपः ॥ १६३ ॥ अप्शब्दादीपोऽनुप् भवति यादिषु परतः । अप्सव्यः । अप्सुयोनिः । अप्सुमतिः । अप्सुचरः ।

+जे ॥ १६४ ॥ अपः ईपोऽनुब्भवति घे

घौ परत अप्सुजः ।

+शुनग्रवृड्वर्षाशरत्कालात् ॥ १६५ ॥ एभ्य ईपोऽनुप् भवति जे घौ परतः । दिविजः । प्रावृषिजः । वर्षासुजः । शरदिजः । कालेज ।

+शरवरक्षरवर्षाद् वा ॥ १६६ ॥ शरादिभ्य ईपो जे वाऽनुब्भवति । शरेज. । शरज । वरेजः । वरजः । क्षरेज । क्षरज । वर्षेजः।वर्षजः।

।शयवासिवासेऽकालात् ॥ १६७ ॥ अकालवाचकादीपो वाऽनुप् भवति शयादिषु परत । बिलेशयः । बिलशयः । वनेवासी । वनवासी । ग्रामेवासः । ग्रामवासः । अकालादिति किं ? पूर्वाह्णशयः । अपराह्णशयः ।

*कालाज्झकालतने ॥ १६८ ॥ कालवाचकादीपो वानुब्भवति झादिषु परतः। पूर्वाह्णतरा । पूर्वाह्णतरे।पूर्वाह्णेतमा।पूर्वाह्णतमे।अपराह्णेतमा। अपराह्णतमे।पूर्वाह्णेकाले।पूर्वाह्णकाले। अपराह्णेकाले।अपराह्णकाले।पूर्वाह्णेतन ।पूर्वाह्णतनः। अपराह्णेतनः । अपराह्णतन । कालादिति किं ? शुक्लतरे । शुक्लतमे ।

×नेन्सिद्धस्थे ॥ १६९ ॥ इन्सिद्धस्थेषु परेषु ईपोऽनुप् नास्ति । स्थण्डिलशायी । काम्पिल्यसिद्धः।साङ्काश्यसिद्ध । पर्वतस्थः। कूटस्थः।

+गोपुचर ॥ १७० ॥ अत्रेपोऽनुप् निपात्य । गोपुचरः ।

ताया शापे ॥ १७१॥ तानुप् भवति शापे आक्रोशे गम्यमाने । चोरस्यकुल । चोरस्यमार्या। दासस्य कुल।दासस्यभार्या।शाप इति किंदासकुलं।

पुत्रे वा ॥ १७२ ॥ शापे ताया वानुप् भवति पुत्रे घौ । दास्याःपुत्रः, दासीपुत्रः ।

+वाग्दिक्पश्यतो युक्तिदण्डहरे ॥ १७३ ॥ एभ्यो युक्त्यादिषु तानुप भवति । वाचोयुक्तिः। दिशोदण्डः।पश्यतोहर ।वाचस्पतिरित्यपि दृश्यते ।

+शेफपुच्छलांगूलेषु सौ शुन ॥ १७४ ॥ श्वन्शब्दात्तानुप् भवति शेफादिषु सौ । शुनःशेफ । शुनःपुच्छः । शुनोलांगूल । साविति किं ? श्वशेफ ।

*दिवोदासप्रिये ॥ १७५ ॥ दिव्देवाभ्या तानुप्भवति दासप्रिययोः परतः सौ। दिवोदासः। देवानांप्रियः ।

ऋतां विद्यायोनिसंबधात् ॥ १७६ ॥ ऋकारान्तानां विद्यासंबधात् योनिसंबधाच्च वर्तनानां तानुप् भवति । होतु पुत्र । होतुरन्तेवासी । पोतु पुत्र । पोतुरन्तेवासी । मातु पुत्र । मातुरन्तेवासी । ऋतामिति किं ? उपाध्यायपुत्र । विद्यायोनिसंबधादिति किं ? भर्तृगृह ।

वा स्वसृपत्यो. ॥ १७७ ॥ ताया वाऽनुब्भवति अनयो परत । मातु स्वसा । मातु ष्वसा । मातृष्वसा । ननादु पति । ननान्दृपति । योनिसंबधादिति किं ? भ्रातृस्वसा ।

*डान् द्वंद्वे ॥ १७८ ॥ ऋकारान्ताना द्वंद्वे डान् भवति घौ परत । होतापोतारौ । नेष्टोद्गातारौ । मातादुहितरौ । यातानान्दरौ ।

*पुत्रे ॥१७९॥ ऋता पुत्रे घौ डान् भवति। पितापुत्रौ । मातापुत्रौ ।

* अग्नेंद्रादिषु देवतानां ॥ १८० ॥ द्वंद्वे पूर्वस्य डान् भवति अग्नेंद्रादिषु सुपु परत । इंद्राग्नीसोमौ । इंद्राबृहस्पती । सूर्याचंद्रमसौ । अग्नेंद्रादिष्विति किं ? ब्रह्मप्रजापती । दिवाकरनिशाकरौ । स्कंदविशाखौ । शिववैश्रवणौ । देवतानामिति किं ? अग्नींद्रौ माणवकौ ।

षोमवरुणेऽग्नेरी ॥ १८१ ॥ अग्ने षोमवरुणयो परयोर्देवताद्वंद्वे ईत्व स्यात् । अग्नीषोमौ । अग्नीवरुणौ ।

* नैष्यविष्णवद्वे ॥ १८२ ॥ अग्नेरैष्विषयें

विष्ण्विंद्रद्वंद्वे यौ टानीत्वे न स्त । आग्निमारुत । आग्निवारुणी । ऐपीति किं ? अग्नामरुतौ । अनिविष्णिवद्र इति किं ? आग्नावैष्णव । आग्नेंद्र ।

उपासोपसः ॥ १८३ ॥ उपस उपासा इत्ययमादेशो भवति देवताद्वंद्वे । उपश्च नक्त च उपासानक्त । उपासानक्ते ।

दिवो द्यावा ॥१८४॥ दिवो द्यावा इत्ययमादेशो भवति देवताद्वंद्वे । द्यौश्च क्षमा च द्यावाक्षमे । द्यावाभूमी ।

दिवस् पृथिव्या वा ॥१८५॥ दिव दिवस् भवति पृथिव्या देवताद्वंद्वे वा । दिवस्पृथिव्यौ । द्यावापृथिव्यौ ।

मातरपितरौ ॥ १८६ ॥ मातृपित्रोर्द्वंद्वे द्वयोररादेशो वा निपात्यः । मातरपितरौ । मातापितरौ ।

*स्त्र्यसुपि सर्वे पुवत् ॥१८७॥ स्त्रियम्रक्त सर्वे पुवद् भवति असुपि परतः । सर्वासां प्रियः सर्वप्रियः । भवत्याः पुत्रः भवत्पुत्रः । एकक्षीर । सर्वकाम्यति । स्त्रीति किं ? विद्यानिवासः । असुपीति किं ? सर्वस्यै । यस्याः । तस्या । सर्वमिति किं सर्वा प्रिया अस्य सर्वप्रियः । सर्वमनोज्ञ । इत्यादिनिषेधविषयेऽपि यथा स्यात् ।

*स्त्र्युक्तपुंस्कादनूरेकार्थेऽड्ट्प्रियादौ स्त्रिया ॥ १८८ ॥ स्त्री उक्तपुंस्कात् पर स्त्रीत्वः ऊत्यवर्जित एकार्थे उड्तप्रियादिवर्जिते स्त्रिया वर्तमाने यो पुवत् पुंलिंगवद् भवति । दर्शनीया भार्या यस्यासौ दर्शनीयभार्य । शोभनभार्य । चारुजघ । प्रसूतभार्य । स्त्रीति किं ग्रामणि कुल दृष्टिरस्य ग्रामणिदृष्टि । उक्तपुंस्कादिति किं खालावृदारिक । तनुकेशीभार्य । अनूरिति किं वामोरूभार्यः एकार्थ इति किं कल्याण्या माता कल्याणीमाता । अड्ट्प्रियादाविति किं कल्याणी पञ्चमी आसा कल्याणीपञ्चमा रात्रय । कल्याणीमनोज्ञ । कल्याणी भक्ती । प्रियामिति किं कल्याणीप्रधान ।

तरादौ ॥१८९॥ तसादिषु परत स्त्री पुवद् भवति । तस्यास्तत । तस्या तत्र । यया प्रकृत्या यथा । तथा । अजय्या । आढ्यतरा । आढ्यतमा इत्यादि ।

*द्रुति भो जातिश्च ॥१९०॥ स्त्री जातिरन्या च भमञ्ज्ञा द्रुति पुंवद् भवति । गार्गायण्याः अपत्य गार्गी जात्र । गार्गेरो जाल्म । एन्यां साधु एत्य । हस्तिनीनां समूह हास्तिक । भ इति किं कठीरूप्य ॥

×ढेऽग्निः ॥ १९१ ॥ अग्निः पुंवद् भवति ढे परत । अग्नायी देवताऽस्य आग्नेय । नियमार्थोऽयं योग । ढेऽग्निरेव पुंवद् नान्यः । श्यैनेय । रौहिणेयः ।

*गुणस्त्वतलि ॥ १९२ ॥ गुणवचन त्वतलौ परतः पुवद् भवति । पट्व्याः भावः पटुत्व, पटुता । मृदुत्व । मृदुता । गुण इति किं ? कठीत्व ।

+बह्वल्पार्थे शसि ॥ १९३ ॥ बह्वर्थोऽल्पार्थश्च शसि इति पुवद् भवति । बह्वीभ्यो देहि बहुशो देहि । अल्पशो देहि ।

+मृगक्षीरादिषु ॥ १९४ ॥ एषु कृतिपदेषु यत्पूर्वपद तदस्त्रियामनेकार्थे च यो पुवद् भवति । मृग्याः क्षीर मृगक्षीर । कुक्कुटाड । मृगपद ।

क्यङ्मानिनो ॥ १९५ ॥ क्याङि मानिनि च परत स्त्री पुवद् भवति । एनीवाचरति एतायते । हरितायते । दर्शनीया मन्यते दर्शनीयमानी । शोभनमानी ।

न बुङ्कस्कोङ् ॥ १९६ ॥ वोर्हृतश्च यः ककारस्तदुङ् स्त्री पुवन्न भवति । पाचिकाभार्यः । पाचिकात । पाचिकायते । पाचिकामानिनी । लाक्षिकीशाटिक । लाक्षिकात । लाक्षिकायते । लाक्षिकामानिनी । बुङ्ग्रहण किं ? मूकभार्यः ।

नदयाम्भार्य ।

दस्त्वु ॥ १९७ ॥ डडता खुश्च स्त्री पुंव द्भवन्ति । पचमीभार्य । दरदीभार्य । पचमीत । पचमीयते । पचमीमानिनी । दत्ताभार्य । गुप्ताभार्य । दत्तात । दत्तायते । दत्तामानिनी ।

*एऽमृदरक्तविकारे ॥ १९८ ॥ रक्तविकार वर्जितेऽर्थे येऽनिमित्त यद् हृत् तदता स्त्री पुंवन्न भवति । आत्मीभार्य । माथुरीभार्य । माथुरीत । माथुरीयते । माथुरीमानिनी । एनिति किं ? धन्यभार्य । निष्ठावनिभार्य । हृदिति किं ? कुम्भकारभार्य । पुष्पलावभार्य । अरक्त विकारे इति किं ? काषायी बृहतिका अस्य काषायबृहतिक । लौही ईषा यस्य लौहेषो रथ ।

अमानिनीस्त्वाङ्गात् ॥ १९९ ॥ स्वाङ्गाद् य ईदता स्त्री पुंवन्नाम्न्यमानिनी धौ परत । दीर्घकेशीभार्य । दीर्घकेशीत । दीर्घकेशीयते । अमानिनीति किं ? दीर्घकेशमानिनी । ईदिति किं ? पृथुनयनभार्य । स्वाङ्गादिति किं? पटुभार्य ।

जाति ॥ २०० ॥ जातिश्च स्त्री पुंवन्न भवति अमानिनि धौ परत । कठीभार्य । कठीत । कठीयते । शूद्राभार्य । शूद्रात । शूद्रायते ।

पुंवद् यजातीयदेशीये ॥२०१॥ स्त्री पुंवद् भवति यसञ्ज्ञके से जातीयदेशीययोश्च परत । वृहत्कोऽपि पुंवद् भवति । पाचकवृन्दारिका । पाचकजातीया । पाचकदेशीया । लाक्षिकवृन्दा रिका । ङ्युरपि—पत्नमवृन्दारिका । पचमजा तीया । पचमदेशीया । दत्तवृन्दारिका । दत्तजा-तीया । दत्तदेशीया । एऽमृदरक्तविकारेऽपि पुंवद् भवति । माथुरवृन्दारिका । माथुरजातीया । माथुरदेशीया । स्वाङ्गादीतोपि—दीर्घकेशवृन्दा रिका । दीर्घकेशजातीया । दीर्घकेशदेशीया । जातिरपि—कठवृन्दारिका । कठजातीया । कठदेशीया ।

इरपकल्पचेल्ड्ब्रुवगोत्रमतहते प्रोऽने-काच ॥ २०२ ॥ ईरन्तीत्यातस्यानेकाच शादिषु परतः प्रो भवति । गौरितरा । गौरि-तमा । गौरिरूपा । गौरिकल्पा । गौरिचेली । गौरिब्रुवा । गौरिगोत्रा । गौरिनुता । गौरिमता । गौरिहता । कुमारितरा । कुमारितमा । कुमारि रूपा । इत्यादि । अनेकाच इति किं ? श्रितरा । श्रीतरा । ईदिति किं ? दत्तातरा ।

।गौरिभोगान्मत खौ ॥ २०३ ॥ गौरि-भोगाभ्या मत्वताभ्या खौ ईत प्रो भवति शा दिषु परत । गौरिमतितरा " गौरिमतितमा । भोगवतितरा । भोगवतितमा । एव रूपादिष्वपि योज्यखौ"इति किं गौरिमतिरूपा, गौरीमतीरूपा।

*वा मो ॥ २०४ ॥ मुमञ्ज्ञकस्य शादिषु परत प्रो वा स्यात् । स्त्रितमा । स्त्रीतमा । लक्ष्मितमा लक्ष्मीतमा । वामोरुतरा । वामो-रूतरा । एव-रूपादावपि । मोरिति किं ? कारिषातरा ।

वोगित ॥ २०५ ॥ उगितः परस्य मो प्रो वा स्यात् शादिषु परतः । विदुषितरा, विदु-षीतरा । विदुत्तरा । पचतितमा, पचतीतमा । पचत्तमा । एव सर्वत्र । उगित इति किं ? कुमारितरा । पुनर्वाग्रहणमुभयविकल्पार्थं ।

आद् महतो जातीये च ॥२०६॥ आका-देशो भवति महतो जातीये एकार्थे च धौ परतः महाजातीयः । महामुनिः । महापुरुषः । महा प्राणा । महाबाहु । महात्मा । जातीये चेति-किं ? महत पुत्रः महत्पुत्र ।

+करघासविशिष्टे वा ॥ २०७ ॥ महतः करादिषु परेषु आद् वा स्यात् । महतः-कर महा-कर । महत्कर । महाघास । महद्घास । महाविशिष्ट । महद्विशिष्ट

*ङ्या ॥ २०८ ॥ ङीत्यातस्य महत परा दिप्वाङ् भवति । महत्याः कर: महाकरः। महा घास ।महाविशिष्टः ।

*अष्टनोऽब्याशीत्योःस्यौ प्राक्शतात त्रेस्त्रय ॥२०९॥ द्वि अष्टन् इत्येतयोराङ् भवति । त्रिसंज्ञे स्यौ परत, शतात् प्राक् त्रेस्त्रयस् बस मशीतिं च वर्जयित्वा । द्वादश । द्वाविंशति । द्वात्रिंशत् । अष्टादश । अष्टाविंशति । अष्टा त्रिंशत् । त्रयोदश । त्रयोविंशति । त्रयस्त्रिंशत् । द्व्यष्टन. त्रेरिति किं' चतुर्दश । अबाशीत्योरिति किं ' द्विना । अष्टदशाः। त्रिदशाः । द्व्यशीति त्र्यशीति ।प्राक्शतादिति ।किं ' द्विशत । द्विसहस्र । अष्टशत । अष्टसहस्र । त्रिशत । त्रिलक्ष ।

वा चत्वारिंशदादौ ॥२१० ॥ द्व्यादीनामाङ् वा भवति चत्वारिंशदादौ परतः । द्विचत्वारिंशत् । द्वाचत्वारिंशत् । अष्टाचत्वारिंशत् । अष्टचत्वारिंशत् । त्रयश्चत्वारिंशत् । त्रिचत्वारिंशत् । द्वापचाशत् । द्विपचाशत् । अष्टापचाशत् । अष्टपचाशत् । त्रय पंचाशत् । त्रिपचाशत् । द्वानवति । द्विनवति । अष्टानवति । अष्टनवति । त्रयोनवति । त्रिनवति ।

*दशन्येका ॥२११॥ दशनि स्यौ एकस्य दीर्निपात्यते । एकादश । दशनीति किं' एकविंशति ।

।षष' उईतरि चादेर्धोष्टु ॥२१२॥ षष उर्भवति दतृशब्दे दशि च परे धोरादेष्टुश्च । षोडन् । षोडश ।

– धात्वे वा ॥२१३॥ षष उत्व वा धात्वे धोरादेः टुश्च नित्य स्यात् । षोढा । षड्ढा ।

न्नस् नासिकायास्तस्क्षुद्रे ॥ २१४ ॥ नासिकाशब्दस्य नस् भवति तस्ये क्षुद्रे च परत । नस्तः । नस्क्षुद्रः ।

।येऽवर्णे ॥२१५॥ नासिकाया नस् भवति अवर्णे यत्ये परे । नस्य । अवर्ण इति किं ' नासिक्यो वर्णः ।

हृदयस्य हृल्लेखाण्यलासे ॥ २१६ ॥ हृदयस्य हृद् भवति लेखादिषु परतः । हृल्लेखः। हार्द । हृद्य । हृल्लासः ।

*पद् पादस्याज्यातिगोपहते ॥ २१७ ॥ पादस्य पदादेशो भवति आज्यादिषु परतः । पदाजिः । पदातिः। पदग । पदोपहतः ।

पद् ये ॥२१८॥पादस्य पदित्ययमादेशो भवति यत्ये परतः । पद्य ।

हिमकाषिहतौ ॥ २१९ ॥ पादस्य पद् भवति हिमादिषु परतः। पद्धिम। पत्काषी। पद्धतिः

*शस्यृचः ॥२२०॥ ऋचः सम्बन्धिनः पादस्य पदादेशो भवति शसि स्ये परे । पच्छः गायत्रीं शंसति । ऋच इति किं ' पादशः श्लोकं कथयति ।

वा निष्कघोषमिश्रशब्दे ॥२२१॥ पादस्य पद् वा भवति निष्कादिषु परत । पन्निष्क । पादनिष्कः । पद्घोषः । पादघोष । पन्मिश्र । पादमिश्र । पच्छब्दः । पादशब्द ।

*उदकस्यादेव हलि पूर्वे ॥ २२२ ॥ उदकस्य उद इत्ययमादेशो भवति वा पूर्वेर्थे एकहलादौ स्यौ परतः। उदकुम्भ । उदककुम्भ । उदपात्र । उदकपात्र । एकहलीति किं ' उदकस्थाली। पूर्व इति किं ' उदकगिरि ।

मंथौदनसक्तुबिन्दुवज्रभारहारवीवधगाहे ॥२२३॥ उदकस्योदो भवति वा मथादिषु परत. उदमथ- । उदकमथ । उदौदन । उदकौदन । उदसक्तु । उदकसक्तु । उदबिंदु । उदकबिंदु । उदवज्र। उदकवज्र। उदभार । उदकभार । उदहार । उदकहार । उदवीवधः । उदकवीवधः । उदगाह । उदकगाह ।

*मिपेषवासवाहने ॥ २२४ ॥ घ्यादिषु-

कस्योदो भवति । उदधि । उदपेष पिनष्टि । उदवासः । उदवाहनः ।

*घोश्च खौ ॥ २२५ ॥ उदकस्य प्राक् पदस्य घोश्च खावुदो भवति । उदमेघः औदमेधिः । उदवाहः । औदवाहिः । शीतोदा । क्षीरोदा । लवणोद । कालोदः । खाविति किं ? उदकपर्वत ।

*घोऽ ॥ २२६ ॥ पूर्वपदस्य घोश्च उस्वा स्यात् । देवदत्तः । देवः । दत्त । भीमसेनः भीमः । सेन । सत्यभामा । सत्या । भामा ।

*इक-प्रोऽङ्घ्यादिपुत्रपणे ॥ २२७ ॥ इगतस्य प्रो वा स्यात् घौ स चेदिक् ङीत्य इयुवोः स्थानी यणादेशो शिश्च न भवति । लक्ष्मीपुत्रः । लक्ष्मिपुत्रः । ग्रामणीपुत्रः। ग्रामणिपुत्रः। यवलुपुत्रः । यवलूपुत्रः। खलपुपुत्रः। खलपूपुत्र ।इक इति किं ? खट्वापादः । अङ्यादेरिति किं ? गार्गीपुत्रः । भ्रौकुल, भ्रूकुल । ओमुदगधीभूतिः । वृषलीभूत ।

ङ्यापो क्वचित्त्वो ॥ २२८ ॥ ङी आप् इत्येवमन्तस्य क्वचित् प्रो भवति । रेवतिमित्र महिलाता । शिलवहः । मधुरज । क्वचिन्न स्यात । नांदीमुख । गङ्गाद्वारा क्वचिद्द्वय । पृथिवीदत्तः, पृथिवीदत्तः । गङ्गादेवी । गङ्गदेवी । इन्द्रिदन्त तीर्थंकरः तीर्थंकरः । ङ्याप इति किं । श्रीपुर । खाविति किं ? नदीस्रोतः ।

त्वे ॥ २२९ ॥ ङ्यापोस्त्वे क्वचित् प्रो भवति । रोहिणित्व । रोहिणीत्व । अजत्व । अजात्व ।

*मालेषीकेष्टकस्यान्तस्य च भारितूलचिते ॥ २३० ॥ मालादीनां तदन्तानां च भार्यादिषु परतः प्रो भवति । मालभारी । मालभारिणी । उत्पलमालभारिणी । इषीकतूल । मुञ्जेषीकतूल । इष्टकचितं । पक्वेष्टकचित ।

–भ्रुवः कुटिकुसेऽच ॥२३१॥ कुटिकुसयो परतो भ्रुवः प्रो भवति अश्चातादेशः । भ्रुकुटि । भ्रकुटि । भ्रुकुस । भ्रकुसः ।

खित्यङ्गे कृति ॥ २३२ ॥ अजन्तस्याङ्गे प्रो भवति खित्कृति परत । खट्वमन्या । हरिणिमन्या । कालिमन्या । रोहिणिमन्या । अङ्गेरिति किं ? दोषामन्यमह ।दिवामन्या रात्रि

मुमच ॥ २३३ ॥ अजन्तस्याङ्गे मुम् भवति खित्कृति परत. । जनमेजय । स्तनंधयः । प्रियवद । क्षेमकर । अच इति किं ! विद्वन्मन्यः ।

अमेकाचोऽम्वत् ॥ २३४ ॥ एकाचोऽजन्तस्याम् भवति खित्कृति अमीव चास्मिन् कार्यं स्यात् । गामन्य । स्त्रीमन्यः । नरमन्य । एकाच इति किं ? लेखाभ्रमन्या । अच इति किं ? विन्मन्यः ।

सत्यागदास्तो कारे ॥ २३५ ॥ सत्यादीनां कारे परे मुम् भवति । सत्यकार । भगदकार । अस्तुकार ।

*भ्राष्ट्राग्न्योरिंधे ॥ २४६ ॥ इधे घौ मुम् भवति भ्राष्ट्राग्न्योः । भ्राष्ट्रमिंधः । अग्निमिंधः ।

×भद्रोष्णयोः करणे ॥ २३७ ॥ अनयोः करणे घौ मुम् भवति । भद्रंकरण । उष्णंकरण ।

। गिलगिलगिलयोरगिलस्य ॥ २३८ ॥ गिलतमुक्तस्याजन्तस्य गिलगिलगिलयोः मुम् भवति । तिमिंगिलः । तिमिंगिलगिलः । अगिलस्येति किं ? तिमिंगिल गिलतीति तिमिंगिलगिलः ।

। धेनुभव्यामध्यदिनलोकंपृणानभ्यासमित्याः ॥२३९॥ धेन्वादीनां भव्यादिषु मुम् निपात्यः । धेनुभव्या । मध्यंदिनं । लोकंपृणः । अनभ्यासमित्यः ।

*रात्रेः प्रमाचन्द्रस्य॥ २४० ॥ रात्रेः कृदते यौ मुम् भवति प्रभाचन्द्रस्याचार्यस्य मतेन । रात्रिंचरः । रात्रिचरः । रात्रिमाटः । रात्र्याटः

नञोऽन् ॥ २४१ ॥ नञः अन् भवति यौ परतः । अधर्मः , अहिंमा । अस्तेय ।

अचि ॥ २४२ ॥ नञः अजादौ परे अन् भवति । अनुपमो निजः । अनतः अ-नादिः । पुनः सूत्र नकारग्रहणार्थं ।

+क्षेपे मिङि ॥ २४३ ॥ नञोऽन् भवति क्षेपेऽर्थे मिङि । अपचसि त्व जाल्म । क्षेप इति किं ? नपचसि छात्र ।

*एकादङ्नाऽस्रौ ॥ २४४ ॥ एकशब्दात् नञोऽद् अस्नौ स्न यौ परे । एकेन न विंशतिः एकान्नविंशति । एकान्नविंशति । एकान्न त्रिंशत् । एकान्नत्रिंशत् ।

नगो वाऽजीवे ॥२४५॥ नग इति निपात्यतेऽजीवेऽर्थे वा॥न गच्छंतीति नगा ।अगाः वृक्षाःपर्वता । वा । अजीव इति किं ? अगः पुत्रः शीतेन ।

सहस्य स' खौ ॥ २४६ ॥ सहस्य स आदेशो भवति यौ । साश्वत्थ । सपलाशं । सा-निति किं ? सहकृत्वा ।

*ग्रथांताधिकाहृद्ये ॥२४७॥ ग्रथान्तेऽधि-केऽदृदये च वर्तमानस्य सहस्य सो भवति यौ परतः । ज्योतिषमधीते । सद्रोणा खारी।सानिः कपोतः । सपिशाचा वात्या ।

हेऽकाले ॥ २४८ ॥ हसे सहस्य सो भवति अकाले । सचक्रं धेहि । सधुरं प्राज । अकाल इति किं ? सहपूर्वाह्ण । सहापराह्णं भुक्ते ।

वा नीच ॥ २४९ ॥ नीच सहस्य सो भवति यौ वा । सपुत्रः । सहपुत्रः पिता । सछात्र । सहछात्रः आगतः । नीच इति किं ? सहकृत्वानी ।

नाशिष्यगोवत्सहले ॥ २५० ॥ सहस्य सो नास्ति आशिषि अगोवत्सहलेषु परतः । स्वस्ति सह संपाय गुरवोसस्मि राज्ञे सहलोकाय। आशिर्षीति किं ? सछात्रः । अगोवत्सहल इति किं ? स्वस्त्यस्तु सगवे सहगवे तुभ्य।सवत्साय,सह-वत्साय तुभ्यं । सहलाय सहहलाय तुभ्य ।

*समानस्य धर्मादिषु॥२५१॥समानस्य सादेशो भवति धर्मादिषु परेषु । सधर्मा । सपक्षः । सजातीयः । सरूपः । सस्थान । सवर्ण । सवय । सनामा । सबधुरित्यादि ।

सब्रह्मचारी ॥ २५२ ॥ समानस्य सो निपात्यो ब्रह्मचारिणि यौ । समानो ब्रह्मचारी सब्रह्मचारी ।

*दृग्दृशदृक्षे ॥२५३॥ समानस्य सो भवति घञादिषु परतः । सदृक् । सदृश । सदृक्षः । घग्रहणमुत्तरार्थं ।

किमिदमः कीश् ॥ २५४ ॥ किमिदमोः कीश् इत्येतावादेशौ भवत घत्वादिषु परतः । कियान् । कीदृक् । कीदृशः । कीदृक्ष. । इयान् ईदृक् । ईदृशः । ईदृक्ष ।

*आ ॥ २५५ ॥ पूर्वपदस्यार्थात् त्यदादेश्चा-कारादेशो भवति घत्वादिषु परत । अन्यादृक् । अन्यादृश । अन्यादृक्षः । तावान् । तादृक् । तादृशः । तादृशी । तादृक्षः। यावान् । यादृक् । यादृश । यादृशी । यादृक्षः । भवादृक् । भवादृश । त्वादृश । मादृशः । युष्मादृशः । अस्मादृश ।

*विष्वग्देवयोष्टेरद्र्यचौ क्वौ ॥ २५६ ॥ विष्वग्देवयोः टेश्च टेरद्रिरादेशो भवत्यंचतौ क्व्य-ते परतः। विष्वद्र्यङ् । देवद्र्यङ् । सर्वद्र्यङ् । तद्र्यङ् । कद्र्यङ् । युष्मद्र्यङ् । अस्मद्र्यङ् । भवद्र्यङ् । देवद्रीची । मद्रीची । विष्वग्देव

म्नेरिनि किं ? पाराङ् ।

*संसहयो समिसध्री ॥ २५७ ॥ ससह स्थाने समिसध्रि इत्येतावादेशौ भवत अचतौ क्वौ परत. । सम्यङ् । सध्यङ् । समीचीसध्रीची।

*तिरसः तिर्ये ॥ २५८ ॥ तिरसः तिरि इत्ययमादेशो भवति अकारादावचतौ परतः । तिर्यङ् । तिर्यञ्चौ । तिर्यञ्चः । तिर्यग्भ्या । ए इति किं ? तिरश्चः । तिरश्ची ।

*द्व्यन्तर्गेरीदपोऽनात् ॥ २५९ ॥ द्व्यन्त भ्यां अनवर्णान्तात् गेश्चाप, ईत्व स्यात् । द्वीपः । अंतरीप । समीप । नीप । वीपं । अनादिति किं ? प्राप । पराप ।

देशेऽनोरूः ॥ २६० ॥ देशार्थेऽनोः पर स्याप ऊर्भवति । अनूपः । देशे इति किं ? अन्वीपो ग्रामः ।

छकारकेऽन्यस्य दुग् ॥२६१॥ छे कारके चान्यस्य दुगागमो भवति।अन्यदीय।अन्यत्कारकं।

* रागोत्सुकोत्याशिथतास्थाशाशिष्यताभस्य ॥ २६२ ॥ तातभातवर्जितस्यान्यस्य दुगागमो भवति रागादिषु परत । अन्यद्राग । अन्यदुत्सुक । अन्यदूतिः । अन्यदासितः । अन्यदास्था । अन्यदाशा । अन्यदाशीः।अताभस्येति किं ? अन्यस्यान्येन वा रागः—अन्यरागः ।

वाऽर्थे ॥ २६३॥ अताभातस्यान्यस्यार्थे वा दुग् भवति । अन्यदर्थः । अन्यार्थ ।

*ष्यस्येश् वेऽद्भृते मातरि ॥२६४॥ष्यात स्य वमे अकार ऋकार ककाराते मातरि घौ वा ईश भवति । कारीषगन्ध्या माता अस्य कारीषगधीमात । कारीषगन्ध्यामातः । कारीषगंधीमाता । कारीषगन्ध्यामाता । कारीषगधीमातृकः । कारीषगन्ध्यामातृकः । ष्यस्येति किं ? इभ्यामाता । व इति किं ? कारीषगन्ध्यामाता ।

*वन्यौ ॥ २६५ ॥ ष्यस्य वे बधौ परे ईश् भवति । कारीषगंधीबधु । कौमुदगधीबधु ।

*पे पुत्रपत्योः ॥ २६६ ॥ पसे पुत्रपत्योः ष्यस्य ईश् भवति । कारीषगंधीपुत्रः । कारीषगधीपतिः । कौमुदगधीपुत्र । कौमुदगंधीपति । प इति किं ? कारीषगन्ध्यापतिर्ग्रामः । पुत्रपत्योरिति किं ? कारीषगन्ध्याकुल ।

तत्कोः पेऽचि ॥२६७॥ को कद् भवति पसे अजादौ घौ परे । कदज । कदन । कदशन । प इति किं ? किमो राजा । कुष्ट्रः । कश्वः । अचीति किं ? कुभोजन ।

रथवदे ॥ २६८॥ कोः कद् भवति रथ वदयोः परतः। कद्रथ । कद्वदः ।बसेऽपि कद्रथो राजा । कद्वदः खल ।

तृणे जातौ ॥ २६९ ॥ को कद् भवति तृणे घौ जात्यर्थे । कत्तृण । कुतृणान्यन्यत्र ।

कत्त्रिः ॥ २७० ॥ कोः किमो वा त्रौ घौ परे कन्निपात्य । कत्त्रयः । कत्त्रिः ।

का पथ्यक्षे ॥ २७१ ॥ कोः का भवति पथ्यक्षयोः परत । कापथः । काक्ष ।

*अल्पे ॥ २७२ ॥ ईषदर्थे कोः का भवति। ईषन्मधुर काधुर । काकटुक । कालवण ।

पुरुषे वा ॥ २७३ ॥ कोर्वा का- स्यात् पुरुषे परतः । कापुरुषः, कुपुरुषः ।

कव चोष्णे ॥ २७४ ॥ कोः कवादेशो भवति का च वा उष्णे परे । कवोष्ण । कोष्ण । कदुष्ण ।

×मास्पाकमांस्पचने ॥ २७५ ॥ मांसस्य पाकपचनयोःपरत ख - वा निपात्यते।मांस्पाक । मांसपाकः । मांस्पचनं । मांसपचन ।

×सम खं तते ॥ २७६ ॥ समस्तते परत. ख वा स्यात् । सतत । संतत ।

*स्कृसि ॥ २७७ ॥ समुत्क्रम्य कुत्रोऽवयवे सकारे परे समः स वा भवति।सम्स्कर्ता।सम्कर्ता। सीति किं ? संचस्कार ।

*सम्तुमोर्मनः कामे ॥ २७८ ॥ सम्तुमोः स भवति मनसि कामे च परतः । समनाः । सकामः । भोक्तुमनाः । भोक्तुकामः ।

*कृत्येऽवश्यमः ॥२७९॥ अवश्यमः स्व भवति त्यसंज्ञे परतः । अवश्यकर्तव्यं । अवश्यदेयं ।

*पृषोदरादयः ॥ २८० ॥ पृषोदरप्रकाराः शब्दाः साधवो भवन्ति। पृषदुदरमस्य पृषोदरः । तत्रमत्र । वारिणो वाहक —बलाहकः । महीं रौति मयूरः । शवानां शयन–श्मशानं । पिशितमश्नाति पिशाचः । उर्ध्वौ कर्णौ अस्य उलूक । मेहनस्य खस्य माला मेखला । जीवनस्य मूतः बंधः जीमूतः । उर्ध्वं खमस्य उलूखल । मुहुस्वन लाति मुशल । दिवि ओको येषां ते दिवौकसः । कौ जीर्यतीति कुजरः । मह्यां शेते महिषः । बलं वर्द्धयति बलीवर्द्दः । हलस्य ईषा हलीषा । लांगलीषा । कुलान्यटतीति कुल्टा । न स्त्री न पुमान् नपुंसक । नास्मिन्नक दु खमस्तीति नाक । न आप्यतेऽसौ नापित । न मीयतेऽसौ नमेरुः ।नातरेण भवतीति नातरीयकं। शकृत्स्याधु शकंधु । कर्कंधुः ।

वर्णागमो वर्णविपर्ययश्च द्वौ चापरौ वर्णविकारनाशौ । धूतोस्तदर्थातिशयेन योगस्तदुच्यते पंचविधं निरुक्तं॥

। दिग्भ्यस्तीरस्य तारः ॥२८१॥ दिग्वाचिभ्यः परस्य तीरस्य तारादेशो भवति । दक्षिणतारं । उत्तरतारं । पूर्वतारं । दिग्भ्य इति किं? गंगातीरं । उत्तरसूत्रस्थवाग्रहणेन सिंहावलोकितन्यायेन दक्षिणतीरमपि स्यात् ।

*वियविसायाद्वाऽह्नस्याहन् डौ ॥२८२॥ वियसायाद् विसायाभ्यां चाह्नस्याहन् वा स्यात् डौ परत । द्व्यहनि।द्व्यह्नि।द्व्यह्ने।यावदहनि।यावदह्नि । यावदह्ने । व्यहनि । व्यह्नि । व्यह्ने ।सायाहनि । सायाह्नि । सायाह्ने ।वियविसायादिति किं ? पूर्वाह्णे । मध्याह्ने।

*स्वचिह्नस्याविष्टाष्टपंचभिन्नछिन्नछिद्रस्रुवस्वस्तिकस्य दीः कर्णे ॥२८३॥ स्वचिह्नवाचकस्य कर्णे घौ दीर्भवति विष्टादीन् मुक्त्वा । दात्राकर्णः । द्विगुणाकर्णः । शंकुकर्ण । स्वचिह्नस्येति किं ? शोभनकर्ण । लम्बकर्णः । अविष्टादेरिति किं ? विष्टकर्णः । अष्टकर्णः । पंचकर्णः । भिन्नकर्ण. । छिन्नकर्ण । छिद्रकर्णः । स्रुवकर्ण । स्वस्तिककर्ण ।

नहिवृतिवृषिव्यधिरुचिसहितनौ क्वौ वा गे ॥२८४॥ नहादिषु क्विबंतेषु परेषु पाचोर्गेश्च दीर्भवति । उपानत् । प्रावृत् । प्रावृट् । मर्माविध् । नीरुक् । ऋतीषट् । परीतत् ।

*हविर्युक्ते कपालगवेऽष्टनः ॥ २८५ ॥ अष्टनः कपाले गवे च हविषि युक्तेऽर्थे च दीर्भवति । अष्टाकपाल हवि । अष्टागव शकट । हविर्युक्त इति किं ? अष्टकपालः । अष्टगुः ।

*खौ ॥२८६॥ अष्टनः दीर्भवति खौ।अष्टापदः कैलासः । अष्टाचक्रा अष्टाविटप । खाविति किं ? अष्टधर्मच्छित जिन. ।

*गिरिवनेऽञ्जनकोटरादेः॥२८७॥गिरिवनयोः परतः अञ्जनादीनां कोटरादीना च दीर्भवति खौ। अञ्जनागिरिः । किंशुलकागिरिः । कुक्कुटागिरिः। इत्यादि । कोटरावण । मिश्रकावण । इत्यादि । अंजनकोटरादेरिति किं ? कृष्णगिरिः । मदनवनं । खाविति किं ? अंजनगिरिः । कोटरवन ।

*बह्वच्छरादीनां मत्यनजिरादेः ॥२८८॥ बह्वचा शरादीना च मतौ खौ दीर्भवति अजिरादीन्मुक्त्वा । उदुम्बरावती । शरावती । पुष्क-

रावती । अमरावती । शरावती । मुनीवती । कपीवती । वशावती । बह्वच्छरादीनामिति किं ? इक्षुमती । मधुमती । अनजिरादेरिति किं ? अजिरवती । खदिरवती ।

चितेः कपि ॥२८९॥ चितेः कपि खे दीर्घो भवति । एकचितीकः । द्विचितीकः । त्रिचितीकः ।

*विश्वस्य नरे ॥२९०॥ विश्वस्य दीर्घो भवति नरे परे खौ । विश्वानरः । विश्वनरो राजान्यत्र । नर इति किं ? विश्वसेनः ।

ऋषौ मित्रे ॥२९१॥ विश्वस्य मित्रे परे दीर्घो भवति ऋष्यर्थे खौ । विश्वामित्र ऋषिः । विश्वमित्रोऽन्यः ।

*वसुराटोः ॥२९२॥ विश्वस्य वसुराटोः परे दीर्घो भवति । विश्वावसुः । विश्वाराट् । राडिति विकृतनिर्देशादिह न भवति । विश्वराजौ । विश्वराजः ।

*वहेऽपील्वादीकः ॥२९३॥ अपील्वादीनामिक वहे परतः खौ दीर्घो भवति । ऋषीवहं । मुनीवहं । अपील्वादीति किं ? पील्वहं । चारुवहं । इक इति किं ? पिंडवहं ।

गेः काशे ॥२९४॥ गरिगतस्य काशे खौ दीर्घो भवति । नीकाशः । वीकाशः । अनूकाशः । गेरिति किं ? साधुकाशः । इक इत्येव—प्रकाशः ।

*दि ॥२९५॥ दा इत्येतस्मिन् द्वितकारादेशे परतो गेरिगतस्य दीर्घो भवति । वीत्तं । नीत्तं । परीत्तं । प्रण रित्तम । चीति किं ? सुदत्तं । इक इति किं ? प्रत्तं । अवत्तं ।

*घञि प्राय ॥२९६॥ घञन्ते खो परतो गेर्दी भवति प्रायः । नीक्लेदः । नीमार्गः । अपामार्गः । प्राकारः । प्रासादः । प्रावारः । क्वचिन्न स्यात्—विषादः । प्रहारः । प्रकारः । प्रसादः । निवेशः । निष्पन्दः । क्वचिद्विकल्पः । प्रतिहारः । प्रतीहारः ।

वले ॥२९७॥ पूर्वस्य दीर्घो भवति वलन्ते प्रायः । कृषीवलः । आसुतीवलः ।

*इन्यात् ॥२९८॥ इजन्ते खौ पूर्वस्याकारादेशो भवति । केशाकेशि । कचाकचि । दण्डादण्डि । मुसलामुसलि । मुष्टामुष्टि । प्राय इति किं ? अहरहसि ।

*शुनः ॥२९९॥ शुनःप्रायो दीर्घो भवति । श्वादतः । श्वावर्णः । श्वादष्ट्रा । श्वाचराह । श्वापुच्छं । न चान्ति । अशुनः । द्वयमपि । श्वपद । श्वापद ।

अन्यस्यापि ॥३००॥ अन्यस्याप्यशिब्दस्य यावद्यावदपि दीर्घो भवति । दक्षिणापथः । उत्तरापथः । पूरुषः । नारकः ।

चौ ॥३०१॥ अचतौ लुप्तनकाराकारे परतः पूर्वस्य दीर्घो भवति । प्राचः । प्राचा । प्रतीचः । प्रतीचा । प्राची । प्रतीची । दधीचः । मधूचः । दधीची । मधूची ।

*ढ्रलेऽणः ॥३०२॥ ढ्रः ख यस्मिन् तत् ढ्रल तस्मिन् ढ्रले पूर्वस्याणो दीर्घो भवति । लीढं । उपगूढं । आनीरथेन याति । इदृरथमारोहति । नीरक्तं । नीरजः । दूरूढं । अण इति किं ? ऊढं ।

सहवहोऽस्यौ ॥३०३॥ सहिवहोरस्य ढ्रले ओत् स्यात् । सोढा । सोढुं । सोढव्यं । वोढा । वोढुं वोढव्यं । अस्येति किं ? ऊढः । ऊढवान् ।

इति शब्दार्णवापरनाम्नि जैनेन्द्रमहाव्याकरणे शब्दार्णवचन्द्रिकायां वृत्तौ चतुर्थाध्यायस्य तृतीयः पादः ॥३॥

## चतुर्थः पादः

गोः ॥ १ ॥ गोरित्ययमधिकारो वेदितव्य आचतुर्थपादपरिसमाप्तेः । वक्ष्यति—केऽणः मादेशः । कुमारिका । गोरिति किं ? कुमारीं कायतीति कुमारीकः ।

*हलो यणिन्दः ॥ २ ॥ गोरवययाद्धलः परस्य यणिगतस्य दीर्घभवति । सवीतः । शूनः । आहूत । जीनः । हल इति किं ? उत । उतवान् । उतिः । उत्वा । गोरिति किं ? निरुत । दुरुत ।

नाम्यतिसृचतसृ ॥३॥ तिसृचतसृवर्जितस्य गोर्दीर्घभवति नामिपरे । सर्वज्ञाना । मुनीना । साधूनां । नामीति किं ? चर्मणा । अतिसृचतसृ इति किं ? तिसृणा । चतसृणा । गोरिति किं ? क्रिमिणा पश्य । परमना पश्य ।

नुर्वा ॥ ४ ॥ नुर्नामि परे वा दीर्घभवति । नृणा पतिः । नृणा पतिः ।

नोडः ॥ ५ ॥ नकारान्तस्य गोरुडो दीर्घ भवति नामि परतः । पचाना । सप्तानां । अष्टाना । नवाना ।

घेऽकौ ॥ ६ ॥ क्विवर्जिते घे नोडो दीर्घ भवति । धनानि । राजा । राजानौ । राजनः । राजान । तक्षा । तक्षाणौ । अकाविति किं ? हे राजन् ।

*स्महतोः ॥ ७ ॥ सकारान्तस्य महतश्च घेऽकौ नोडो दीर्घभवति । श्रेयासि । यशासि । सर्पीषि । धनूषि । श्रेयान् । श्रेयासौ । श्रेयासः । श्रेयास । श्रेयासौ । महान् । महान्तौ । महान्तः । महांत । महांतौ । अकाविति किं ? हे श्रेयन् । हे महन् ।

स्वसृनप्तृनेष्टृत्वष्टृक्षत्तृहोतृपोतृप्रशास्तृनृणां ॥ ८ ॥ स्वसादीनां तृजन्ताना अपश्च घेऽकौ दीर्घभवति । स्वसारौ । स्वसारः । स्वसार । स्वसारौ । नप्तारौ । नेष्टारौ । । त्वष्टारौ । क्षत्तारौ । होतारौ । पोतारौ । प्रशास्तारौ । वदितारौ जनापवादान । कर्तारौ । कर्तारः । आपः । स्वापि तदा गानि । नप्त्रादिग्रहण नियमार्थ । उणादिसिद्धानामेषामेव दीर्घान्येषा । मातरौ । पितरौ ।

जामातरौ । दुहितरौ ।

इनहनपूषार्यम्णां शौ ॥ ९ ॥ एषामुडो दीर्घभवति शौ परे । बहुदण्डीनि । बहुवाग्मीनि कुलानि । बहुभ्रूणहानि । बहुपूषाणि । बहूर्यमाणि । घेऽकाविति सिद्धे नियमार्थोऽयं योगः । एषा शावेव दीर्घान्यत्र । दण्डिनौ । वृत्रहणौ । पूषणौ । अर्यमणौ ।

सौ ॥ १० ॥ इन्नादीनामुडो दीर्घभवति सौ परे । दण्डी । छत्री । वाग्मी । तपस्वी । वृत्रहा । ब्रह्महा । पूषा । अर्यमा ।

अत्वसोऽभ्वादेः ॥ ११ ॥ अत्वन्तस्या-सन्तस्य चाभ्वादेः सावकौ दीर्घभवति । भवान् । गुणवान् । मुक्तवान् । सुपयाः । वेधा । चन्द्रमा । अभ्वादेरिति किं ? पिंडग्र । चर्मव । इपुमस्या-स्तीति इप्वः । अकाविरेव हे भवन् । हे सुपयः ।

हस्य झल्क्ङोः क्विति ॥१२॥ क्रमश्च हस्य गोरुडो दीर्घभवति झलादौ क्ङिति क्वौ च परतः । शात । शशातः । दात । ददान्तः । तात । ततातः । प्रतान् । प्रशान् । प्रदान् । हस्येति किं ? पक्तिः । झल्क्ङोरिति किं ? शम्यते । दम्यते । क्ङिति किं ? यत्ता ।

*हन्यचां सनि ॥ १३ ॥ हन्तेरिणिगिडादेशस्य गमेरजन्ताना च दीर्घभवति झलादौ सनि परत । जिघासति । जिगास्यते । अभिजिगास्यते । अधिजिगासते । चिचीषति । चिकीर्षति ।

तनो वा ॥ १४ ॥ तनोतेः सनि झलादौ वा दीर्घभवति । तितांसति । तितसति । झलीति किं ? तितनिषति ।

क्रमः क्त्वि ॥१५॥ क्रमःक्त्वि त्वे वा दीर्घभवति । क्रत्वा । क्रान्त्वा । झलादावित्येव क्रमित्वा ।

छ्वः शूठ् ऊठ् च॥१६॥ ओदउन्ताद्वकारयो

शूठावादेशौ स्तः इसेर झलादौ किति कौ च परत । प्रश्नः विश्नः । पृष्ट । पृष्टवान् । पृष्ट्वा । पृष्टिः । शब्दप्राट् । श्योमा । स्यूतः । स्यूतवान् । स्यूत्वा । स्यूति । पटस्यू । घूतः । घूतवान् । घूत्वा । घूतिः । अक्षघूः । अक्षघुवौ, अक्षघुवः । हिरण्यघूः । हिरण्यघुवौ । हिरण्यघुव ।

ज्वरत्वरश्रिव्यविमवां चोङो ॥ १७ ॥ ज्वरादीनां वकारस्योडश्च ऊर्भवति इझलादौ कौ च । जूर्ति । जू । जुरौ । जुरः । तूर्ति । तूः । तुरौ । तुरः । तूण । तूर्णवान् । श्योमा । श्रूतः । श्रूतवान् । श्रूः श्रुवौ । श्रुवः । ऊतिः । ऊः । उवौ । उवः । मूर्तिः । मू । मुवौ । मुव ।

र ख ॥ १८ ॥ रेफात्परयो छ्वोः ख भवति । हुर्छा–हूर्णः । हूर्णवान् । हूः । हुरौ । हुरः । हूर्ति । मूर्छा–मूः । मुरौ मुरः । मूर्त । मूर्तवान् । मूर्त्ति । तुर्वी–तूर्ण । तूर्णवान् । तू । तुरौ । तुरः । धुर्वी–धू । धुरौ । धुरः । धूर्ण । धूर्णवान् । धूर्ति ।

*ईटीटः ॥ १९ ॥ इटः परस्य ईटि परे अर्थात् से ख भवति । अदेवीत् । असेवीत् । अकोपीत् । अमोषीत् । ईटीति किं ? अलविषु । इट इति किं ? अकोपीत् ।

•असिद्धोऽत्राभादयुग्युक् ॥ २० ॥ असिद्ध भवत्याभाच्छास्त्र अत्र शास्त्रे युग्युग्वर्जिते क- र्तव्येऽएधि, शाधि इत्यत्र एत्वशाभावयो कृतयो झल्लक्षणं धित्वमप्राप्तमसिद्धत्वात् भवति । जही- त्यत्र जभावे कृतेऽतो हेर्लुप् प्राप्तःसिद्धत्वान्नास्ति । अत्रेति किं ? अभाजि । एपि नस नासिद्ध । आभादिति किं ? रराधिव । रराधिम । एधाम्बे नुम्नासिद्ध । अयुग्युगिति किं ? उपादिदीये । बभूव । यणि उवि च कर्तव्ये युग्वुको नासिद्धौ ।

श्नान्नः खं ॥ २१ ॥ श्नात्परस्य नकारस्य ख भवति । व्यनाक्ति धर्मं । भनक्ति पाप । श्नादिति किं ? नदनः । सानुनयग्रहण किं ? यत्नानां ।

हलुङः क्ङित्यनिदितः ॥ २२ ॥ हलुङो नकारस्य भवति अनिदितो गो क्ङिति परे । ध्वस्त । ध्वस्तवान् । दनीध्वस्यते । सूस्यते । सनीस्रस्यते । हल्ग्रहण किं ? नीतः । उङः इति किं ? नद्धः । क्ङितीति किं ? ध्वसित्वा । स्रंसित्वा । अनिदित इति किं ? शक्यते । शाशक्यते । मक्यते । मामक्यते ।

+कपलगांगविकारोपतापे ॥ २३ ॥ कपिलग्योर्नेख भवति अगविकारोपतापयोः क्ङिति । विकपित । विलगित । विकंपितो विलंगितोऽन्यत्र ।

गमहनजनखनघसोऽनाङि ॥ २४ ॥ गमादीना हलुङः ख भवति क्ङिति अनङपरे । जग्मतुः । जघ्नतुः । जघ्नुः । जज्ञे । जज्ञाते । जज्ञिरे । चख्नतुः । चख्नुः । जक्षतु । जक्षु । अनङीति किं ? अगमत् । अघसत् ।

•दशसजः शपि ॥ २५ ॥ दशिसञ्ज्योर्नेख भवति शपि परे । दशति । दशत । दशति । सजति । सजतः । सजति ।

रञ्जेः ॥ २६ ॥ रञ्जेर्नकारस्य शपि परत ख भवति । रजति । रजत ।

णौ मृगरमणे ॥ २७ ॥ रञ्जेर्नस्य णौ परे ख स्यात् मृगरमणार्थे । रजयति मृगान् व्याध । मृगरमण इति किं ? रञ्जयति सभां नट. ।

घञि भावकरणे ॥ २८ ॥ रञ्जेर्नख भवति भावे करणे च घञि परतः । रजन रज्यतेऽनेन वा रागः । भावकरण इति किं ? रज्यतेऽस्मिन्निति रंगः ।

स्यदो जवे ॥ २९ ॥ स्यदेर्घञि नखमनप् च निपात्यते जवेऽर्थे । गोस्यदः । अश्वगोस्यदः ।

जव इति किं ? घृतम्यदः ।

* दशनावोदैधौद्मश्रथहिमश्रथाः ॥३०॥ दशनादयो निपात्यतेऽनहादौ परतः । दशनः । दंशेर्नखं । अवोदः । उंदेर्घञि नखं । एधः । इंधेर्घञि नखैपौ । औद्मः । उदेर्मनि नखैपौ । श्रथः । हिमश्रथः । प्रहिमाभ्या श्रंथेर्घञि नखमेवमावौ निपात्यौ ।

नाऽचोऽर्चे ॥३१॥ अंचेः पूजायामर्थे नखं न भवति । अंचितः शांतिनाथः । अंचितवान् जिनं । अंचित्वा गुरून् गतः । अर्चे इति किं ? उदक्तमुदकं कूपात् ।

स्त्वि स्कंदस्यंदोः ॥३२॥ अनयोः क्त्वा परे नखं न स्यात् । स्कंत्वा । स्यंत्वा । क्त्वीति किं ? प्रस्कद्य । प्रस्यद्य ।

*नशजोर्वा ॥ ३३ ॥ नशेर्जेकारांतस्य च क्त्वि परे नखं वा स्यात् । नष्ट्वा । नंष्ट्वा । रक्त्वा रंक्त्वा । भक्त्वा । भंक्त्वा ।

भंजेर्णौ ॥ ३४ ॥ भंजेर्णौ परतः नखं वा स्यात् । अभाजि । अभंजि पाप मुनिना ।

*शासोऽङ्हलीत् ॥ ३५ ॥ शासो गोरङः इश्चवति अङि हलादौ च क्ङिति परतः । आशिषत् । शिष्टः । शिष्टवान् । शिष्ट्वा । शिष्टिः । शिष्यः । शिष्मः । अङ्हलीति किं ? शशासतु. । शशासुः ।

क्वौ ॥ ३६ ॥ शास उङः क्वावित्वं स्यात् । आर्यशीः ।

शा हौ ॥ ३७ ॥ शासः शा इत्ययमादेशो भवति हौ परे । प्रशाधि । अनुशाधि ।

हंतेर्जः ॥ ३८ ॥ हतेर्ज इत्ययमादेशो भवति हौ परतः । जहि मन्युं पापं वा ।

*हन्मन्यमरम्नमगमवनातितनादेर्ङ्खं झलि ॥ ३९ ॥ हनादीनां वनतेस्तनादीना च झलादौ क्ङिति परे ङ्खं स्यात् । हतः । हतवान् । हत्वा । हतिः । मतः । मतवान् । मत्वा । मतिः यतः । यतवान् । यत्वा । यतिः । रतः । रतवान् । रत्वा । रतिः । नतः । नतवान् । नत्वा नतिः । गतः । गतवान् । गत्वा । गतिः । वतः । वतवान् । वत्वा । वतिः । ततः । ततवान् । तत्वा । ततिः । क्षतः । क्षतवान् । क्षत्वा । क्षतिः । क्षितः । क्षितवान् । क्षित्वा । क्षितिः । ऋतः । ऋतवान् । ऋत्वा । ऋतिः । तृतः । तृतवान् । तृत्वा । तृतिः । घृतः । घृतवान् । घृत्वा । घृतिः । वतः । वतवान् । वत्वा । वतिः हनादीनामिति किं ? शांतः । दांतः । झलीति किं ? हन्यते । मन्यते ।

प्ये ॥ ४० ॥ हनादीनां प्ये परे ङ्खं भवति । प्रहत्य । प्रगत्य । प्रतत्य । प्रघत्य । प्रक्षत्य ।

वा मः ॥ ४१ ॥ हनादीनां मांताना प्ये परे ङ्खं वा भवति । नियत्य, नियम्य । वियत्य, वियम्य । प्रणत्य, प्रणम्य । आगत्य, आगम्य ।

गमादीनां क्वौ ॥ ४२ ॥ एषां ङ्ख भवति क्वौ परतः । जनगत् । कलिंगगत् । मोक्षगतो मुनयः । सयत् । सुमत् । परीतत् । सुतत् ।

न क्तिचि दीर्घ ॥ ४३ ॥ हनादीना क्तिचि परे ङ्ख दीर्घ न भवति । हन्यादिति हंतिः । मंतिः । यतिः । रंति । नंतिः । गंति. । तंतिः ।

वन्याः ॥ ४४ ॥ ङातस्य गोः वनि परे आत्व भवति । विजावा । अग्रेगावा, दधिकावा ।

जन्सन्खनां ॥ ४५ ॥ एषां ङस्य झलादौ क्ङित्याकारादेशो भवति । जातः । जातवान् । जात्वा । जातिः । सातः सातवान् सात्वा । सातिः । खातः । खातवान् । खात्वा । खातिः ।

सनि ॥ ४६ ॥ जनादीना सनि झलादौ

आत्व स्यात् । सिषासति । झलीति किं ? जिज निषते । सिसनिषति । चिखनिषति ।

ये वा ॥ ४७॥ तेषा यकारे क्ङित्यात्व वा स्यात् । जायते । जन्यते । जाजायते । जज न्यते । सायते । सन्यते । सासायते । ससन्यते खायते । खन्यते । चाखायते । चखन्यते ।

तनेर्यकि ॥ ४८ ॥ तनोतेर्यकि आत्व वा स्यात् । तायते । तन्यते ।

सन क्तिचि खं च ॥४९॥ सनः खमाश्च या स्यात् क्तिचि परतः। सतिः सातिः सतिः ।

अगे ॥ ५० ॥ अगे इत्ययमधिकारो ज्ञेय । वक्ष्यति–हलो यः । वेविदिता । चेछिदिता । अग इति किं ? बेभिद्यते । चेछिद्यते ।

* भ्रस्जरसोऽड् ॥ ५१ ॥ भ्रस्जेः फेसकारयो रगेऽड् भवति वा । भ्रष्टा । भर्ष्टा । भ्रष्टु । भर्ष्टुं भर्ष्टव्य । भ्रष्टव्य । भर्जनं । भ्रजन । भर्गः भ्रज्जः

*दरिद्र' ख लुङि ॥ ५२ ॥ दरिद्रातः खं वा स्यात् लुङि परतः । अदरिद्रात् । अदरिद्रासात्

अस्मन्वुण्ण्वने ॥ ५३ ॥ दरिद्रातेरग ख स्यात् सकारादिसन वुण ण्वु अनट च विहाय दरिद्यात् । दरिद्यते । अस्मन्वुण्ण्वने इति किं ? दिदरिद्रासति । दरिद्रायको व्रजति । दरिद्रा यक । दरिद्राण । सकारादिविशेषण सन किं ? दिदरिद्रिषति ज्ञापकमिदमेव दरिद्राते सनीड्विकल्पस्य ।

हलो यः ॥ ५४ ॥ हलः परस्य यकारस्य ख भवत्यगे परत । बेभिदिता । बेभिदितु । बेभिदितव्य । मरीमृजिता । मरीमृजकः । हल इति किं ? फडूयिता । लोलूयिता ।

या क्य ॥ ५५ ॥ हल क्यच्क्यङो: सं वा स्यात् अगे परत । समिधिता । समिध्यिता । समिधितु । समिध्यितु । दृषदिता । दृषधिता । दृषदितु । दृषधितु । दृषदितव्य । दृषधितव्य ।

* अतः ॥ ५६ ॥ अकारान्तस्य ख भवत्यगे परतः । चिकीर्षिता । चिकीर्षितु । चिकीर्षितव्य । प्रचिकीर्ष्य ।

णेः ॥ ५७ ॥ णेः ख भवत्यगे परत । अततक्षत् । कार्यते । कारण । कारकः ।

ते सेटि ॥ ५८ ॥ तसञ्ज्ञके सेटि परे णे ख भवति अगे परतः । कारितः । कारितवान् । हारितः । हारितवान् । गणित । लक्षितं । नियमार्थोऽय योगः त एव सेटि नान्यस्मिन् । कारयिता । हारयिता ।

*नामतास्वाय्येत्न्वौ ॥ ५९ ॥ आमादिषु परतो णे ख न स्यात् । कारयाचकार । हारयाचकार । गडयतः । मडयंतः । स्पृहयालु । महयाय्यः । स्तनयित्नुः । गदयित्नु ।

प्येऽय् षिपूर्वात् ॥ ६० ॥ षिपूर्वाद्वर्णाद् परस्य णेरयादेशो भवति प्ये परत प्रश्थय्य । प्रशमय्य । प्रबेभिदय्य । प्य इति किं ? प्रबेभिदितः । षिपूर्वादिति किं ? प्रतिपाद्य गतः ।

वाऽऽपः ॥ ६१ ॥ आपः परस्य णेरय् भवति वा प्ये परे । प्रापय्य । प्राप्य ।

क्षेर्दीः ॥ ६२ ॥ क्षेः प्ये परे दीर्भवति । प्रक्षीय । परिक्षीय ।

तेऽण्ये ॥ ६३ ॥ अण्यार्थे तसञ्ज्ञे क्षेर्दीर्भवति । क्षीणो देवदत्तः । अक्षीणो यज्ञदत्तः । अण्य इति किं ? क्षितमस्य ।

वा दैन्याक्रोशे ॥ ६४ ॥ क्षेर्वा दीर्भवति दैन्ये आक्रोशे च तेऽण्ये परतः । क्षितोऽय । क्षीणोऽय । क्षितोऽसि जाल्म । क्षीणोऽसि जाल्म ।

*सिस्यसीयुट्तासां दौ ग्रहाञ्हन्दृशो षिट् ॥

॥ ६५ ॥ अज्ग्रहनेभ्यो हनदृशाभ्यां च परेषां स्यादीनां ञानर्थे ञिड्वा स्यात् । अग्राहिपाता । अग्रहीपाता । ग्राहिष्यते । ग्रहीष्यते । ग्राहिषीष्ट । ग्रहीषीष्ट । ग्राहिता । ग्रहीता । अग्लायिपाता । अग्लासाता । ग्लायिष्यते । ग्लास्यते । ग्लायिषीष्ट । ग्लासीष्ट । ग्लायिता । ग्लाता । अचायिपाता । अचेषाता । अस्ताविषाता । अस्तोषाता । चायिष्यते । चेष्यते । स्ताविष्यते । स्तोष्यते । अघानिपाता । अहसाता । अघानिषाता । घानिष्यते । हनिष्यते । घानिषीष्ट । वधिषीष्ट । घानिता । हता । अदर्शिषाता । अदृक्षाता । दर्शिष्यते । द्रक्ष्यते । दर्शिषीष्ट । दृक्षीष्ट । दर्शिता । द्रष्टा । स्यादीनामिति किं ? ददे दान । लवितारः केदारं । ञाविति किं ? लविष्यति केदारं । पविष्यति यवराशिं । ग्रहादिग्रहणं किं ? पक्ष्यते ओदनः ।

दीङोऽचि ञिङ्ति युक् ॥ ६६ ॥ दीङः ञिङ्त्यजादौ परे युगागमो भवति । उपदिदीयेषे । उपदिदीये । उपदिदीयाते । उपदिदीयिरे । अचीति किं ? उपदीयते । ञिङ्तीति किं ? उपदान ।

इटि चात्व ॥ ६७ ॥ इट्यजादौ च ञिङ्त्यगे परे आकारान्तस्य खं भवति । पपिथ । जग्लिथ । पपतु । पपु । आहुव् । अपा ।

ईद्ये ॥ ६८ ॥ आकारान्तस्य ये परे ईत्वं भवति । देयं । धेयं । म्येयं ।

घुमास्थागापाहाक्सा हलि ॥ ६९ ॥ एषां हलादौ ञिङति ईद् भवति । दीयते । देदीयते । धीयते । देधीयते । धीत वत्सेन । मीयते । मेमीयते । स्थीयते । तेष्ठीयते । गीयते । जेगीयते । गीत । गीतवान् । पीयते । पेपीयते । पीत । पीतवान् । पीत्वा । हीयते । हीनः । हीनवान् । अवसीयते । अवसेषीयते । हलीति किं ? ददतुः ।

लिङ्येत् ॥ ७० ॥ घ्वादीनामेद्भवति लिङि परे । देयात् । धेयात् । मेयात् । स्थेयात् । गेयात् । पेयात् । हेयात् । अवसेयात् ।

वाऽन्यः स्फादेः ॥ ७१ ॥ आकारान्तस्य स्फादेः स्थादीनस्य लिङ्येद्वा स्यात् । ग्लेयात् । ग्लायात् । म्लेयात् । म्लायात् । स्नेयात् । स्नायात् । अन्य इति किं ? स्थेयात् । स्फादेरिति किं ? पायात् ।

न ल्पे ॥ ७२ ॥ घ्वादीनामीत्वं न स्यात् ल्पे परे । प्रदाय । प्रधाय । प्रमाय । प्रस्थाय । प्रगाय । प्रपाय । अवहाय । अवसाय ।

वेर्मेङः ॥ ७३ ॥ मेङः ल्पे इत्वं वा स्यात् । अपमित्य । अपमाय ।

*लुङ्लङ्लृङ्ष्वमाङोऽट् ॥ ७४ ॥ गोरडागमो भवति लुङादिषु परतः माङ्योगं विहाय । अकार्षीत् । अकरोत् । अकरिष्यत् । अहार्षीत् । अहरत् । अहरिष्यत् । ऐक्षिष्ट । ऐक्षत । ऐक्षिष्यते । औब्जीत् । औब्जत् । औब्जिष्यत् । अमाङ इति किं ? मा हार्षीत् । मा भवान् कार्षीत् । मा स्म करोत् । मेक्षिष्ट । मा स्मेक्षत । मौब्जीत । मानिरसीत् । मा स्म निरदीत् । मा स्म निरदत् । अग इति निवृत्त ।

*हल्श्नुयुभ्रुवोऽचीयुवौ ॥ ७५ ॥ एषां इवर्णोवर्णयोरियुवौ स्तः अजादौ परे । प्राप्नुवन्ति । शक्नुवन्ति । चिक्षियतुः । चिक्षियु । तुष्टुवतुः । तुष्टुवुः । भ्रुवौ । भ्रुवः । हल्श्नु इति किं ? चिन्वन्ति । सुन्वन्ति । अचीति किं ? नीः । लूः ।

चभ्यासस्य ॥ ७६ ॥ चस्य य्वोः इयुवौ स्तः असवर्णेऽचि परतः । इयार्ति । इयर्तः । इयूति । इयेष । उवोष । असव इति किं ? ईयतुः । ईयु । ऊषतुः । ऊषु ।

स्त्रियाः ॥ ७७ ॥ स्त्रीशब्दस्येय् भवत्यचि परतः । स्त्रियौ । स्त्रियः ।

वाऽम्शसोः ॥७८॥ स्त्रिया वा इय् भवति अम्शसो परतः। स्त्रियं । स्त्रीं । स्त्रियः । स्त्रीः।

ओतः ॥ ७९ ॥ ओतः आकारो भवति अम्शसोः परतः । गां । गाः । द्यां । द्याः ।

*यणिणः ॥ ८० ॥ इणोऽचि यण् भवति,। यन्ति । यन्तु । यन् ।

×वेकः ॥ ८१॥ इको यण् वा भवति अचि परतः।अध्यीयति । अधियति । अध्यीयन्।अधियन्।

एर्गिवाकुचादुडोऽसुधियः ॥८२ ॥ गिवाकुचाइ परस्माड् उड परस्य इवर्णस्य यण् भवत्यचि सुधीशब्दं त्यक्त्वा । सुन्यौ । सुन्यः । परिण्यौ । परिण्यः।ग्रामण्यौ । ग्रामण्यः । सेनान्यौ । सेनान्यः । चिच्ये । चिच्याते । निन्यतुः । निन्युः । गिवाकुचादिति किं ? नियौ । नियः । उड इति किं ? यवक्रियौ । असुधिय इति किं ? सुधियौ । सुधियः ।

सुप्योः ॥ ८३ ॥ गिवाकुचादुडः परस्योर्वर्णस्य सुप्यजादौ परे यण् भवति । सुल्वौ । सुल्वः।खल्प्व्यः।सुपीति किं ? लुलुवतुः।लुलुवुः ।

दृन्करपुनर्वर्षाभ्यो भ्वः ॥ ८४ ॥ एभ्यो भवतेर्यण् भवति अजादौ सुपि परे । दृन्भ्वौ । दृन्भ्वः । करभ्वौ । करभ्वः । पुनर्भ्वौ । पुनर्भ्वः । वर्षाभ्वौ । वर्षाभ्वः । नियमोऽयं—एभ्य एव भ्वो यण् भवति नान्यस्मात्।स्वयंभुवौ।स्वयंभुवः ।

लुङ्लिटोर्वुक् ॥ ८५ ॥ भुवो वुङ् भवति लुङ्लिटोरचि परे । अभूवम् । अभूवन् । बभूव । बभूवतुः ।

होर्गे च ॥ ८६ ॥ होरकारस्य वकारादेशो भवत्यजादौ गे परतः। जुहुवतुः । ग इति किं ? जुहुवतुः । जुहुवुः ।

गोहेरूडुङ ॥ ८७ ॥ गोहेरडुङः ऊङ् भवति अचि परतः । निगूहते । निगूहयति । निगूहकः । साधुनिगूही । निगूहं निगूहं निगूहो वर्तते । गूहति । उपगूहकः । गोहेरिति विकृतनिर्देशः, किं? निजुगुहुः । निजुगूहतुः,। अचीति किं ? निगाढा । निगोढु । निगोढव्य ।

दोषो णौ ॥८८॥ दोषः उडो णौ परतः ऊद् भवति । दूषयति । दूषयतः । दूषयंति । णौ इति किं? दोषः ।

वा चित्ते ॥८९॥ दोषो णावुङःऊद्वा स्यात् चित्तार्थे । चित्तं दूषयति चित्तं दोषयति । प्रज्ञा दोषयति । प्रज्ञा दूषयति । चित्त इति किं? एकान्तवादप्रयोगो दूषयति ।

* घटादिज्ञपजनीजृक्नसुरञ्जोऽमन्ताश्च मितः । स्वनमकमोऽपर्यपस्खदरूगमयम मोऽम्बोस्तु दीर्घा ॥ ९० ॥ पर्यपपूर्वस्खदिवर्जितानां घटादीनां ज्ञपजनीजृक्नसुरञ्जीनां अमन्तानां च कमुचम्यामिवर्जितानां चोङ् मो भवति णौ अम्णिपरे तु दीर्घा । घटयति । घटंघट । घाटंघाट । अघटि । अघाटि । व्यथयति । व्यथ व्यथ । व्याथ व्याथ । अव्यथि । अव्याथि । क्नगयति । क्नगक्नग । क्नागक्नाग । अक्नगि । अक्नागि । वनयति । वनवन । वानवान । अवनि । अवानि । जनयति । जनजन । जानजान । अजनि । अजानि । जरयति । जरजर । जारजार । अजरि । अजारि । स्नसयति । स्नस स्नस । स्नास । स्नास । अस्नसि । अस्नासि । क्नसयति । क्नसक्नस । क्नासक्नास । अक्नसि । अक्नासि । रजयति । रज रज । राज राज । अरजि । अराजि । गमयति । गमगम । गामगाम । अगमि अगामि । दमयति । दमदम । दामदाम । अदमि । अदामि । अप-

सुनुमः । सुन्वः, सुनुवः । सुन्महे, सुनुमहे । तन्मः, तनुमः । तन्वः, तनुवः । तन्वहे, तनुवहे । तन्महे, तनुमहे ।

*कुर्यि च ॥१०६॥ कृञः परस्यातः खं भवति यकारादौ म्वोश्च परतः । कुर्यात् । कुर्यातां । कुर्युः । कुर्वः । कुर्मः । कुर्वहे । कुर्महे । यि चेति किं ? कुरुतः ।

*गेऽतः क्ङित्युत् ॥१०७॥ कृञोऽत उद्भवति गे क्ङिति परतः । कुरुथः । कुर्वंति । क्ङितीति किं ? करोमि ।

श्नऽसः खं ॥१०८॥ श्नः अस्तेश्चातः खं स्यात् वा गे क्ङिति परतः । रुंधंति । स्वः । स्मः । स्थः । स्तः । संति । क्ङितीति किं ? रुणध्मि । अस्मि । असि । अस्ति ।

श्नाभ्यस्तयोरातः ॥१०९॥ श्नाभ्यस्तयोराकारस्य खं भवति गे क्ङिति परतः । संजिहते । मिमते । मिमता । क्रीणंति । क्रीणते । लुनंति । लुनते । श्नाभ्यस्तयोरिति किं ? यांति । आत इति किं ? बिभ्रति ।

हल्यघोरीः ॥ ११० ॥ घुसंज्ञकवर्जितस्य श्नस्य श्ना इत्येतस्य च ईत्त्वं स्यात् हलादौ क्ङिति परतः । मिमीवहे । मिमीमहे । मिमीषे । मिमीध्वे । मिमीते । लुनीवः । लुनीमः । लुनीतः । हलीति किं ? मिमते । लुनति । अघोरिति किं ? दद्वः । दद्मः । दध्वः । दध्मः ।

इद् दरिद्रः ॥१११॥ दरिद्रातेरात इत्त्वं स्यात् हलादौ क्ङिति गे परतः । दरिद्रिवः । दरिद्रिमः । दरिद्रिथः । दरिद्रितः । दरिद्रियात् ।

भ्यो वा ॥११२॥ बिभेतेर्वा इद् भवति हलादौ क्ङिति गे परतः । बिभिवः । बिभीवः । बिभिमः । बिभीमः । बिभिथः । बिभीथः । बिभितः । बिभीतः । बिभियात् । बिभीयात् । गे इति किं ? भीतः । भीयते ।

हाकः ॥११३॥ ओहाको वा इत्वं भवति हलि क्ङिति गे परतः । जहिवः । जहीवः । जहिमः । जहीमः । जहिथः । जहीथः । जहितः । जहीतः ।

आ च हौ ॥११४॥ हाको हौ परे आत्वं भवति इच्च वा । जहाहि, जहिहि, जहीहि ।

यि खं ॥११५॥ हाकः खं भवति यकारादौ गे क्ङिति परतः । जह्यात् । जह्यातां । जह्युः ।

*घ्वसो रेच्चले ॥११६॥ घुसंज्ञानामस्तेश्च हकारादौ हौ परे एत्त्वं स्यात् तस्य चस्य च खं । देहि । धेहि । एधि । हकारादाविति किं ? दद्यात् । धद्यात् । स्यात् ।

* हल्मध्ये लिट्यतः ॥ ११७ ॥ हलोर्मध्ये वर्तमानस्यातः एच्चखे लः क्ङिति परतः । नेमतुः । नेमुः । पेचतुः । पेचुः । शेकतुः । शेकुः । हल्मध्य इति किं ? आटतुः । आटुः । अत इति किं ? दिदिवतुः । दिदिवुः । तकारः किं ? शशासतुः । शशासुः ।

सेटि ॥ ११८ ॥ सेटि लिटि परतः हल्मध्ये वर्तमानस्यातःएच्चखे लः । येमिथ । पेचिथ । शेकिथ । सेटीति किं ? पपक्थ ।

फलभजोः ॥ ११९ ॥ फलभजोरेच्चखे लः क्ङिति लिटि सेटि च परतः । फेलतुः । फेलिथ । भेजतुः । भेजिथ । भेजे । भेजाते । भेजिरे । नियमार्थोऽयं योगः । एतयोरेव आदेशादेरेच्चखे नान्यस्य । चकणतुः । चकणुः । चकणिथ । जगदतुः । जगदिथ । उवसिथ । इयजिथ ।

त्रप्त्रोः ॥ १२० ॥ त्रपतरत्योर्लिट्येच्चखे लः । त्रेपे । त्रेपाते । त्रेपिरे । तेरतुः । तेरुः । तेरिथ । इदमपि नियमार्थं—अनेकहल्मध्यगतस्यातः त्रपेरेव पम्भिन्नेऽवस्यातः तरतेरेव नान्यस्य । ततक्षतुः । ततक्षिथ । ससरतुः । ससरिथ । विश-

शरतुः । विशशरिथ । चकरतु । चकरिथ ।

वधे राधेः ॥ १२१ ॥ वधेऽर्थे राधेर्लिट्येचखे स्तः । रेधतुः । रेधुः । रेधिथ । वध इति किं ? आरराधतुः ।

*न शासद्दवादेः ॥ १२२ ॥ शसुददो वादीना च लिट्येचखे न स्तः । विशशसतुः । विशशसुः । विशशसिथ । दददे । दददाते । दददिरे । ववणतुः । ववणुः । ववणिथ । ववले ववलाते । वविलरे । ववसे । ववसाते । ववसिरे ।

*वा भ्रम्वम्त्रसजां ॥ १२३ ॥ भ्रमादीना लिट्येचखे वा स्तः । भ्रेमतुः । भ्रेमु । भ्रेमिथ। बभ्रमतु । बभ्रमुः । बभ्रमिथ । वेमतु । वेमुः। वेमिथ । ववमतुः । ववमुः । ववमिथ । त्रेमतुः। त्रेमुः । त्रेसिथ । तत्रसतुः । तत्रसुः । तत्रसिथ। जेरतुः । जेरुः । जेरिथ । जजरतुः । जजरुः । जजरिथ । भ्रमेरादेशादित्वाद् वमेर्वादित्वात् त्रसेरनेकहल्त्वात् जृष एपनिर्देशाकारत्वादप्राप्ते विकल्पः ।

*फणां ॥ १२४ ॥ फणादीना सप्तानामेचखे वा स्तः क्ङिति लिटि सेटि च परतः । फेणतुः । फेणुः । फणिथ । पफणतुः । पफणुः । पफणिथ । रेजतुः । रेजुः । रेजिथ । रराजतुः । रराजुः । रराजिथ । भ्रेजे । भ्रेजाते । भ्रेजिरे । बभ्राजे । बभ्राजाते । बभ्राजिरे । भ्रेसे । भ्रेसाते । भ्रेसिरे । बभ्रासे । बभ्रासाते । बभ्रासिरे । भ्लेसे । भ्लेसाते । भ्लेसिरे । बभ्लासे । बभ्लासाते । बभ्लासिरे । स्येमतुः । स्येमुः । स्येमिथ । सस्यमतुः । सस्यमु । सस्यमिथ । स्वेनतुः । स्वेनुः । स्वेनिथ । सस्वनतुः । सस्वनुः । सस्वनिथ ।

*श्रथिग्रथ्योर्नलं च ॥ १२५ ॥ श्रथिग्रथ्योः क्ङिति लिटि सेटि च परतःएचखे वा स्तः नलं च । श्रेथतुः । श्रेथु । श्रेथिथ । शश्रथतु । शश्रथु । शश्रथिथ । ग्रेथतुः । ग्रेथु । ग्रेथिथ । जग्रथतुः । जग्रथु । जग्रथिथ ।

*दभे ॥ १२६ ॥ दभेः क्ङिति लिट्येचखे स्तः नलं च । देभतु । देभुः ।

*थे वा ॥ १२७ ॥ दभेरेचखे स्तः नलं च थे परे वा । देभिथ । ददम्भिथ ।

×पद्दन्नोमास्हृन्निशसन्यूषन्दोषन्यकञ्छकन्नुदन्नासञ्छस्वाधे ॥ १२८ ॥ पादादीना पदादयो भवन्त्यधे सुपि वा । पदा, पादेन । दद्भिः । दन्तैः । नसा । नासिकया । मासि । मासे । हृदि । हृदये । निशि, निशायां । भस्ना, असृजा । यूष्णा, यूषेण । दोष्णा, दोषा । यक्ना, यकृता । शक्ना, शकृता । उद्ना, उदकेन । आसनि, आसने । अध इति किं ? पाद ।

अनञोऽर्वणोऽसौ ॥ १२९ ॥ अनञ अर्वणः तृभावो भवत्यसौ सुपि परे । अर्वन्तौ । अर्वन्तः । अर्वत्सु । अनञ इति किं ? अनर्वाणौ । । असाविति किं ? अर्वा ।

भस्य ॥ १३० ॥ भस्येत्ययमधिकारो ज्ञेयः आपादपरिसमाप्तेः । तत्रैवोदाहरिष्यामः ।

पादः पद ॥ १३१ ॥ भाद्यातस्य भस्य पदादेशो भवति । द्विपद पश्य । द्विपदा । द्विपदी । त्रिपद । त्रिपदा । त्रिपदे । त्रिपदी । चतुष्पद । चतुष्पदी । व्याघ्रपदः । व्याघ्रपदी । वैयाघ्रपद्यः । भस्येति किं ? द्विपादौ । द्विपादः ।

* वसोर्वस्योरुः ॥ १३२ ॥ भस्य वसोर्वस्योरुर्भवति । विदुषः पश्य । विदुषा । विदुषी । पेचुषः । पेचुषा । पेचुषे । पेचुषी ।

श्वयुवन्मघोनोऽङति ॥ १३३ ॥ श्वादीनां वस्योरुर्भवति अङति परे । शुनः । शुना । शुने । शुनी । यूनः । यूना । यूने । अतियूनी श्री । मघोनः । मघोना । अङतीति किं ?

शुनो विकारः शौवं मांसं । यूनो भावः—यौवनं वर्त्तते । मघोन इदं—माघवनं रूपं ।

अनोऽस्मम्वस्फात् ॥ १३४ ॥ अनंतस्य भस्याकारस्य खं भवति मकारवकारांतात् परं मुक्त्वा । राज्ञः पश्य । राज्ञा । राज्ञी । अम्वस्फादिति किं ? अश्मनः । वर्मणः । पर्वणः । तत्त्वदृश्वनः ।

पन्हंत्घृतराज्ञोऽणि ॥ १३५ ॥ पन्हन् इत्येतदंतस्यानःघृतराज्ञश्चाखं भवत्यणि परे भस्य। पूष्णोऽपत्यं पौष्णः । ताक्ष्णः । भ्रूणघ्नोऽपत्यं भौणघ्नः । वार्त्रघ्नः। घृतराज्ञोऽपत्यं—धार्त्तराज्ञः ।

वा ङिश्योः ॥ १३६ ॥ अनोऽकारस्य खं वा स्यात् ङौ शीशब्दे च परे भस्य । राज्ञि । राजनि । लोम्नि । लोमनि । लोम्नी । लोमनी । दाम्नी । दामनी ।

अचः ॥ १३७ ॥ अंचेर्लुप्तनकारस्य खं भवति । प्रतीचः। प्रतीचा । प्रतीची । दधीचः । दधीचा । दधीची । मधूचः-मधूचा । मधूची । अच इति किं ? साध्वंचः । साध्वंचा ।

ईदुदः ॥ १३८ ॥ उदः परस्याच ईत्वं स्यात् । उदीचः । उदीचा । उदीची ।

*आतोऽनापः ॥ १३९॥ आप्वर्जितस्यातः भस्य खं भवति ।'कीलालपः पश्य । कीलालपा । कीलालपे । शुभंयः पश्य । शुभंया । टाक्त्वः । अनाप इति किं ? माला कुरु ।

*डिति टेः ॥ १४० ॥ टिसंज्ञकस्य खं भवति डिति परे । मुनौ । साधौ ।

*हृति विंशतेस्तेः ॥ १४१ ॥ विंशतेर्भस्य यस्तिशब्दस्तस्य डिति हृति खं स्यात् । विंशतेः पूरणः विंशः । विंशं शतं । हृतीति किं ?।विंशती ।

*नः ॥ १४२ ॥ नकारांतस्य टेः खं भवति हृति परतः । आग्निशर्मिः । दैवशर्मिः । औमिः। औडुलोमिः ।

×ङ्गेः मायः ॥ १४३ ॥ङिसंज्ञकस्य टेः खं भवति हृति परतः । स्वर्भवः सौवः । वहिर्भवो वाह्यः । अकस्माद् भवः-आकस्मिकः । पौनःपुन्यं । न चास्ति—शाश्वतिकः । शाश्वतं । आरातीयः ।

सब्रह्मचर्यादेः ॥ १४४ ॥ एषां टेः खं भवति हृति परतः । सब्रह्मचारिणः शिष्यः साब्रह्मचारः । पीठसर्पिणोऽयं—पैठसर्पः । शिलालिन इमे शैलालाः । शैखंडाः । सुपर्वण इमे सौपर्वाः ।

*श्वचर्मणः संकोचकोशे ॥ १४५॥ श्वचर्मणोः संकोचे कोशे चार्थे टेः खं स्यात् हृति परतः । शुनोऽयं शौवः संकोचः। चर्मणो विकारः चार्मः कोशः।संकोचकोश इति किं ? शौवनः । चार्मणः ।

*वाऽश्महितनाम्नो विकारापत्ये ॥१४६॥ अश्मन् हितनामनित्येतयोः विकारेऽपत्ये चार्थे वा टिखं भवति हृति परतः । अश्मनो विकारः आश्मः । आश्मनः । हितनाम्नोऽपत्यं हैतनामः । हैतनामनः । अन्यत्र—आश्मनः । हैतनामनः ।

*टखेऽह्नः ॥ १४७ ॥ अन्हऽट खयोरेव टेः खं भवति । उत्तमाहः । द्वे अहनी भूतो भावी वा द्व्यहीनः । त्र्यहीनः । टख इति किं ? अन्हा निर्वृत्तमाह्निकं ।

कद्र्वोरोऽस्वयंभुवः ॥ १४८ ॥ कद्रूशब्दस्य उवर्णांतस्य च स्वयंभूवर्जितस्य ओत्वं भवति हृति परतः । कद्र्वाः अपत्यं काद्रवेयः । मंडोरपत्यं मांडव्यः । औपगवः । कापटवः । अस्वयंभुव इति किं ? स्वयंभुव इदं स्वायंभुवं ।

ढे स ॥ १४९ ॥ उवर्णांतस्य स भवति ढे परे। मद्रबाहाः अपत्यं माद्रबाहेय। जम्बा अपत्य जांबेयः।

*एः ॥ १५० ॥ अवर्णांतस्य च भस्य ख भवति हृति परे। दाक्षिः। चौटिः। नाभेय। रौहिणेय। कमडलेयः।

ङ्यां ॥ १५१ ॥ अवर्णेवर्णयो ख भवति ङ्यि परतः। गौरी। कुमारी। कुरुचरी। दाक्षी। प्लाक्षी।

*मत्स्योऽच ॥१५२॥ मत्स्यस्याँऽचो यकारस्य ख भवति ङ्या परतः। मत्सी।

सूर्यागस्त्ययोश्छे च ॥१५३॥ अनयोरुङो यकारस्य ख भवति ङ्या छे च परतः। सूर्यस्य भार्या सूरी। अगस्ती। सौरीयः। आगस्तीय। छे चेति किं? सौर्यं तेजः।

हलो हृतः ॥१५४॥ हल परस्य हृतो यकारस्य ख भवति ङ्या परतः। गार्गी। वात्सी। हल इति किं? वायुवेगी। हृत इति किं? ऊरवी।

क्यच्व्यनाद्यापत्यस्य ॥ १५५॥ क्ये च्वौ अनकारादौ च हृति हलः परस्यापत्यस्य यकारस्य ख भवति। गार्गीयति। गार्गायते। वात्सीयति। वात्सायते। गार्गीभूत। वात्सीभूत। गर्गाणां समूहः गार्गक। वात्सक। वात्सस्याय वात्सीय। गार्गीयः। क्यच्व्यनादिति किं? गार्ग्यायण। वात्स्यायनः। आपत्यस्येति किं? सांकाश्ये भव सांकाश्यकः। काम्पिल्यकः। हल इत्येव—आत्रेयक।

राजन्यमनुष्यस्याके ॥ १५६ ॥ राजन्य मनुष्ययोर्यकारस्य खं नाम्यके परतः। राजन्यानां समूहः राजन्यक। मानुष्यक।

*तैषपौष भे ॥ १५७ ॥ तिष्यपुष्ययोर्यकारस्य ख निपात्यते नक्षत्रविषये। तिष्येण गुरुणायुक्तः तैषः। पौषः। भ इति किं? तिष्यो देवताऽस्य तैष्यः। पौष्यः।

*वांतमांतितमातितोंतियातिपद् ॥१५८॥ अतमादयः शब्दाः कृतवितादिनाशा वा निपात्यते। अतिशयेनांतिकः अंतम। अंतितम। अंतिकतमः। तमेऽतिकस्य तिशब्दस्य कशब्दस्य च ख निपात्यते। अंतिकादागतः अंतितः। अंतिकतः। तसि वा कोप। अंतिके साधुः अंतियः। अंतिक्यः। य कोप। अंतिके सदि-षीदतीतिपद्। अंतिषद्। क्विते सदि कखमन्ये वा म्त।

*बिल्वकादेश्छस्य ॥ १५९॥ बिल्वकादीनां छकारस्य ख भवति हृति परतः। बिल्वाः अस्यां सति बिल्वकीया नदी। तस्या भवः बैल्वकः। वेणुकीया। वैणुकः। वैत्रकीया। वैत्रकः। त्रिकीया। त्रैकः।

तुरिष्ठेमेयस्सु ॥ १६० ॥ तृशब्दस्य ख स्यात् इष्ठे इमनीयसो परतः। अतिशयेन कर्तृमान् करिष्ठः। हरिष्ठः। करीयान्। हरीयान्। इमनुग्रहणमुत्तरार्थं।

टे ॥ १६१ ॥ टेश्च ख भवति इष्ठेमनीयस्सु परतः। पटिष्ठ। पटोर्भावः पटिमा। पटीयान्। लघिष्ठ। लघिमा। लघीयान्।

णाविष्ठवन्मृदः ॥ १६२ ॥ मृदः इष्ठ इव कार्यं भवति णौ परतः। पटुमाचष्टे—पटयति। लघयति। मातृमाचष्टे—मातयति। नदयति। कर्तृमंत—कारयति। हर्तृमंत—हारयति।

ह्रसिमा । ह्रसीयान् । क्षपिष्ठः । क्षेपिमा । क्षेपीयान् । क्षोदिष्ठः । क्षोदिमा । क्षोदीयान् । स्थूलमाचष्टे—स्तवयति । दवयति । यवयति । ह्रसयति । क्षेपयति । क्षोदयति ।

प्रियस्थिरस्फिरादेरः ॥ १६४ ॥ प्रियादीनामिकारादेर्वर्णसंघातस्यात्त्वं स्यादिष्ठेमेयस्सु परतः । प्रेष्ठः । प्रेमा । प्रेयान् । स्थेष्ठः स्थेमा । स्थेयान् । स्फेष्ठः । स्फेमाः स्फेयान् । मापयति । स्थापयति ।

बहुलगुरूरुवृद्धतृप्रदीर्घवृंदारकाणां बंहिगर्वर्त्रपित्रप्द्राघवृंदाः ॥ १६५ ॥ बहुलादीनां बंहादयो भवति इष्ठेमेयस्सु परतः । बंहिष्ठः । बंहिमा । बंहीयान् । गरिष्ठः । गरिमा गरीयान् । वरिष्ठः । वरिमा । वरीयान् । वर्षिष्ठः । वर्षिमा । वर्षीयान् । त्रपिष्ठः । त्रपिमा । त्रपीयान् । द्राघिष्ठः । द्राघिमा । द्राघीयान् । वृंदिष्ठः । वृंदिमा । वृंदीयान् । बंहयति । गरयति । इत्यादि ।

बहोर्भूरुस्नाल्व ॥ १६६ ॥ बहोर्भूभावो भवति अन्माउनेयसोरादेः ल्व । बहोर्भावः—भूमा । अतिशयेन बहु. भूयान् ।

*भूयिष्ठ ॥ १६७ ॥ बहोर्भूयादेशो भवतीष्ठे परतः । भूयिष्ठः ।

*ज्यायान् ॥ १६८ ॥ प्रशस्यस्य वृद्धस्य वा ज्यादेशात्परस्येयसोरात्वं निपात्यं । अतिशयेन प्रशस्यः वृद्धो वा ज्यायान् । ज्यायांसौ । ज्यायासः । ज्यायसी । ज्यायः ।

*रः पृथुमृदुकृशभृशदृढपरिवृढस्योः॥१६९॥ पृथ्वादीनां ऋतरस्य रेफादेशो भवतीष्ठेमेयस्सु परतः । प्रथिष्ठः । प्रथिमा । प्रथीयान् । म्रदिष्ठःम्रदिमा । म्रदीयान् । क्रशिष्ठः । क्रशिमा । क्रशीयान् । भ्रशिष्ठः । भ्रशिमा । भ्रशीयान् । द्रढिष्ठः । द्रढिमा । द्रढीयान् । परिव्रढिष्ठः । परिव्रढिमा । परिव्रढीयान् । प्रथयति । म्रदयति । क्रशयति । भ्रशयति । द्रढयति । परिव्रढयति । पृथ्वादेरिति किं ? ऋजिष्ठः । ऋजिमा । ऋजीयान् । ऋजयति । कृष्णिष्ठः कृष्णिमा । कृष्णीयान् । कृष्णयति ।

नैकाचः ॥ १७० ॥ एकाचः टिखं न भवतीष्ठेमेयस्सु परतः । अतिशयेन त्वग्वान्—त्वचिष्ठः त्वग्वतो भावः—त्वचिमा । त्वचीयान् । त्वग्वंतमाचष्टे त्वचयति । स्रजिष्ठः स्रजिमा । स्रजीयान् । स्रजयति । एकाच इति किं ? अतिशयेन वसुमान् वसिष्ठः ।

अनपत्येऽणीनः ॥ १७१ ॥ इन्नंतस्यानपत्यार्थे अणि परे टिखं न स्यात् । समंततः कुटन सांकोटिनं । सांराविणं । सांमार्जिनं । गुणिन इदं गौणिनं । दांडिनं । छात्रिणं । अनपत्यं इति किं ? बाहुबलिनोऽपत्यं बाहुबलः ।

गाथिविदथिकेशिपाणिगणिस्फादेः॥१७२॥ गाथ्यादीनां स्फादेश्चनो यदुक्तं तन्न भवत्यणि परे । गाथिनोऽपत्यं गाथिनः । वैदथिनः । कैशिनः । पाणिनः । गाणिनः । स्फाग्विणः । माद्रिणः चाक्रिणः ।

*अनोऽवर्मणः ॥ १७३ ॥ मन्नंतस्यावर्मणोऽनपत्य एवाणि यदुक्तं तन्न स्यात् । चर्मणा छन्नःचार्मणो रथः । साम देवता अस्य—सामनः वेम्न इद वैमनं । अनपत्य इति किं ? सुषाम्नोऽपत्यं—सौषामः । अवर्मण इति किं ? सौवर्णवर्मणः । हैरण्यवर्मणः ।

ब्राह्मं ॥१७४ ॥ ब्रह्मणोऽनपत्येऽणि टिखं निपात्यं । ब्रह्मणोऽयं—ब्राह्मो मंत्रः । ब्राह्ममस्त्रं ।

जातौ ॥ १७५ ॥ जात्यर्थे ब्रह्मणोऽनपत्यऽणि टिखं निपात्यं । ब्राह्मी औषधिः । अनपत्य

स्येति किं ? उज्झन् । उज्झिता ।

थादत् ॥ ४ ॥ थात्परस्य झस्य अद् भवति। ददति । ददतु । जाग्रति । जाग्रतु ।

देऽनतः ॥ ५ ॥ दविषयेऽनतः परस्य झस्याद् भवति । चिन्वते । चिन्वतां । अचिन्वत् । विक्रीणते । द इति किं ? पुनति । अनत इति किं ? च्यवंते । उत्प्लवंते ।

* शीङो रत् ॥ ६ ॥ शीङः परस्य झो रद् भवति । शेरते । शेरतां । अशेरत ।

वेत्तेः सिद्धसेनस्य ॥ ७ ॥ वेत्तेः परस्य झो रद् भवति दे सिद्धसेनस्याचार्यस्य मतेन । संविद्रते । संविद्रतां । समविद्रत । संविदते । संविदतां । समविदत ।

भिसोऽतऐस् ॥ ८ ॥ अकारांतात् भिस ऐस् भवति । जिनैः । सुरैः । असुरैः । नरैः । अत इति किं ? यतिभिः । विद्याभिः । ऐस्करणादतिजरसैः ।

* नेदमदसोऽकः ॥ ९ ॥ आभ्यां ककाररहिताभ्यां भिस ऐस् न स्यात् । एभिः।अमीभिः। अक इति किं ? इमकैः ।अमुकैः ।

स्येनात्ङ्यटाङ्सेः ॥१०॥ अतो ङसादीनां स्यादयो भवंति । जिनस्य । जिनेन । जिनात् । अतिजरसेन । आत्करणात्-अतिजरसात् ।

ङेर्य्यः ॥ ११ ॥ अतो ङेर्यो भवति। देवाय। जिनाय । दानाय ।

स्नेः स्मैः ॥ १२ ॥ स्नेः परस्य ङेः स्मै इत्ययमादेशो भवति । सर्वस्मै । विश्वस्मै । अन्यस्मै । तस्मै । यस्मै । कस्मै । अस्मै । अत इति किं ? भवते ।

* ङ्यसेः स्मिन्स्मात् ॥ १३ ॥स्निरकारांतात्परयोर्ङिङसोः स्मिन्स्मातौ स्तः । सर्वस्मिन् । सर्वस्मात् । विश्वस्मिन्।विश्वस्मात्। अन्यस्मिन् । अन्यस्मात्।तस्मिन् । तस्मात्।यस्मिन् । यस्मात् । कस्मिन् । कस्मात् ।

जसः शी ॥ १४ ॥ स्नेरकारांतात्परस्य जसः शी इत्ययमादेशो भवति । सर्वे । विश्वे । अन्ये । ये । ते । के ।

आप औतः ॥ १५ ॥ आबंतात्परस्यौतः शी भवति । कन्ये पश्य । दामे तिष्ठतः। दामे पश्य ।

नपः ॥ १६॥ नपः परस्य औतः शी भवति। दधिनी स्तः । दधिनी पश्य । पापे स्तः । पापे त्यज । फले । धने । वने । कुले । माले ।

जस्शसोः शिः ॥ १७ ॥ नपः परयोः जस्शसोः शिर्भवति । ज्ञानानि संति । ज्ञानान्याश्रय । एवं-दधीनि । मधूनि । कुलानि । मालानि । जश्शसोः सहचरितस्य शसो ग्रहणादिह नेष्यते--पात्रशो ददाति । वनशः प्रविशति ।

*अष्ट औश्॥१८॥अष्टन्शब्दाद् कृताकारात् परयोर्जस्शसोः औश् भवति । अष्टौ याति । अष्टौ पश्य।अकृताकारपरिग्रहदिह न भवति । अष्ट तिष्ठंति।अष्ट पश्य । ज्ञापकमिदमेवात्वविकल्पस्य-प्रधानसंप्रत्ययादिह न भवति। प्रियाष्टानस्तिष्ठंति। प्रियाष्टनः पश्य। ओशा सिद्धेऽप्यौश्ग्रहणमष्टावाचक्षते अष्टयतीति क्विबतेऽपि श्रवणार्थमष्टाविति।

उबिलः ॥ १९ ॥ इल्संज्ञकात् जस्शसोः उप् भवति । षट् । पंच । सप्त । अष्ट । नव । दश कति संति वीक्षस्व वा । प्रधाने कार्यसंप्रत्ययादिह न भवति । प्रियषषः प्रियपंचानः तिष्ठंति । प्रियकतीन् पश्य ।

नपः स्वमोः ॥ २० ॥ नपः स्वमोरुप् भवति। दध्यस्ति । दधि पश्य । एवं- त्रपु । जतु । मधु । उदश्वित् । यत्कुलं, तत्कुलमित्यत्र कृताकृतप्रसंगादनित्यं त्यदाद्यत्वं बाधते । यस्य च लक्षणांतरेणाप्रभावेन निमित्तं विहन्यते न तदनित्यमिति ।

–जरसो वा ॥२१॥ जरसन्तान्नपो वा स्वमोरम् भवति। अतिजरं, अतिजरसं आस्ते पश्य वा।

इकः ह्रस्व ॥ २२ ॥ इगन्तान्नपो वा स्वमो वा ह्रस्व भवति । हे वारे । हे वारि । हे त्रपो, हे त्रपु । प्रियतिसृ । प्रियत्रि ।

अतोऽम् ॥ २३ ॥ अकारान्तान्नपः स्वमोरम् भवति । दर्शन । धन । वन । कुल । जलमस्ति पश्य वा ।

*पचतोऽनेकतरस्यान्याटेर्दुर् ॥ २४ ॥ एकतरवर्जितस्य पचकस्यान्यादेर्दुगागमो भवति स्वमो परतः । अन्यत् । अन्यतरत् । इतरत् । कतरत् । कतमत् तिष्ठति, पश्यति वा ।पच इति किं ? सम, सिम । अनेकतरस्येति किं ? एकतर। नप इति किं ? अन्य । इतरेण सिद्धेऽन्यतरग्रहण किं ? अन्यतम वन ।

युष्मदस्मदो ङसोऽश् ॥ २५ ॥ आभ्या ङसोऽश् भवति । तव । मम ।

ङेमुटोऽम् ॥२६॥ ताभ्या ङेमुटोरम् भवति। तुभ्य । मह्य । त्व । अह । युवा । आवा।यूय।वय। त्वा । माम् । युवा । आवा ।

शसोऽन् ॥ २७॥ ताभ्या शसोऽन् भवति । युष्मान् । अस्मान् ।

* भ्यसोऽपोऽभ्यम् ॥ २८ ॥ ताभ्यामपो भ्यसोऽभ्यम् भवति । युष्मभ्य । अस्मभ्य ।

* भ्योऽसोऽत् ॥२९॥ ताभ्यामर्थात् तयाः भ्यसो ङसेश्चात् भवति । युष्मद् । अस्मद् । त्वत् । मत् ।

साम आकम् ॥३०॥ ताभ्यामुत्तरस्य साम आकम् भवति । युष्माकं । अस्माकं ।

प्यास्तिवाक्से वत्वः ॥ ३१ ॥ क्त्वान्तस्य तिसे वाक्से च प्यो भवति । प्रकृत्य । महत्य । उच्चैःकृत्य । नीचैःकृत्य । तिवाक्स इति किं ? अकृत्वा । परमकृत्वा ।

* लौल्येऽसुग्सुक् क्यचि ॥३२॥ गोः क्यचि परे असुक्सुकौ भवतः लौल्येऽर्थे । दध्यस्यति । दधिस्यति । मध्वस्यति । मधुस्यति । क्षीरस्यति । लवणस्यति । लौल्य इति किं ? दधीयति । मधूयति । क्षीरीयति । लवणीयति ।

यामेऽश्ववृषयो ॥३३॥अश्ववृषयोर्यामेऽर्थेऽसुक्सुकौ स्त क्यचि । अश्वस्यति वडवा । वृषस्यति गौः । याम इति किं ? अश्वीयति । वृषीयति देवदत्त ।

आम्यात् स्ने सुट् ॥३४॥ स्नेरवर्णाता- दामि परे सुडागमो भवति । सर्वेषा । तेषा । येषा । केषा । सर्वासा । यासा । कासा ।

त्रेस्त्रय ॥ ३५ ॥ त्रेस्त्रयो भवत्यामि परे । त्रयाणा । परमत्रयाणा । त्रेरप्रधानत्वादिह न भवति।अतित्रीणा।तिसृणामित्यत्र परेण बाध्यते ।

ष्णल्म्याप्चतुरो नुट् ॥३६॥ एभ्यो नुड् भवत्यामि परतः । त्रिवाना । षण्णा । पचाना । अष्टानामित्यत्रापि परत्वादीत्वे "ष्णाता चेट्" इत्यत्र ग्रहणमुपदेशार्थत्वादिल इति नुट् । श्रीणां । कुमारीणा । वधूना । मालाना । पूजाना । वारीणा । चतुर्णां ।

इदितोऽर्नुम् ॥ ३७ ॥ इदितो धोर्नुमागमो भवति । वदति । वद्यते । वदिता । वदितु । वंदितव्य।निंदित ।निंदितवान् । इदित् इति किं ? पचति । पच । धोरिति किं ? अभैत्सीत् । धिन्विकृण्व्योरिति निर्देशात्त्योत्पत्तेः प्रागेव नुम् । तेन–मरीर्हल, इत्यः सिद्ध । कुडा । हुडा ।कुन्डिरिति सनकारोच्चारण ज्ञापक–इदितो धोर्नुम् न भवति—भेदन ।

शे मुचां ॥ ३८ ॥ मुचादीनां शे परे नुम् भवति । मुचति । लुपति । विंदति । लिंपति ।

सिंचति । कृतति । खिदति । पिंशाति । अष्टौ मुचादय । श इति किं ? मोक्ता । मोक्तु ।

। तृफदृफगुफोभशुभां ॥ ३९ ॥ तृफादीनां शे नुम् भवति । तृम्फति । दृम्फति । गुम्फति । उम्भति।शुम्भति।श इति किं ? तर्पिता। तर्पितु।

नशमस्जेर्झलि ॥ ४० ॥ अनयोर्झलि नुम् भवति । नंष्टा । नंष्टु । नंष्टव्य । नशु अदर्शने । टुमस्जौ शुद्धौ । मंक्ता । मंक्तु । मंक्तव्य । मंक्त्वा । मंक्ष्यति । मिमंक्षति । मस्जेर्नुमि कृते द्वयोः स्फसज्ञाया स्फादिस । झलीति किं ? नशन । मज्जन ।

* जभोऽचि ॥ ४१ ॥ जभेर्नुम् भवत्यचि परतः । जमति । जभकः । साधुजभी । जभजभ । जभो वर्तते । नित्यत्वादेप प्रागेव नुम् । अचीति किं ? जभ्यते । जाभ्य । जजब्धि ।

* रध ॥ ४२ ॥ रधेरचि नुम् भवति । रधयति । रधकः । साधुरधी । रध रध । रधो वर्तते । अचीति किं ? रद्धा । पृथगवचनमुत्तरार्थं ।

* नेट्यलिटि ॥ ४३ ॥ रधेर्न नुम् भवति इडादावलिटि परतः । रधिष्यति । राधिता । राधितु । राधितव्य । इटीति किं ? साधुरधी । अलिटीति किं ? ररधिव । ररधिम । रेधिवानित्यत्र—कसः कित्त्वसामर्थ्यान्नुमः स । लिटीटि इति कर्तव्ये पूर्वेणैव सिद्धत्वान्नियमो भवति । तत्र च क्विटीत्यवेत्यवधारणमाहोस्विल्लिट्येवेटीत्युभयथा संभवेऽन्यतरपरिग्रहो दुर्लभः ।

* रभः ॥ ४४ ॥ रभेरनादावलिटि परे नुम् भवति । आरम्भयति । आरम्भकः । साधुरम्भी । आरम्भमारम्भ । आरम्भो वर्तते । अलिटीति किं ? आरेभे । अचीति किं ? आरब्धा । आरभते इति तुदादित्वाच्छे टुष्नम ।

लभः ॥४५॥ लभेरलिट्यनादौ नुम् भवति लम्भयति । लम्भकः ।साधुलम्भी । अलिटीति किं ? लेभे । अचीत्येव—लब्धा । लभते—इति तुदादित्वाच्छे नश । न च लभे शतास्ति । यस्य शतुर्नुम्विकल्प स्यात् । लभतीति प्रयोगभावेऽपि "वा नपः" इति वाग्रहणात् व्यवस्था विज्ञायते पृथगारभ उत्तरार्थः ।

य्याङ ॥ ४६ ॥ आङः परस्य लभेर्नुम् भवति यकारादौ परतः । आलम्भ्या गौर्ब्राह्मणेन । यीति किं ? आलब्धा । आङ इति किं ? लभ्य । आलम्भ्यागत इत्यत्र नुमोऽन्यत्र सावकाशस्य स ।

उपात्स्तुतौ ॥ ४७ ॥ उपाल्लभेर्नुम् भवति स्तुत्या यत्ये परतः । उपलम्भ्य धन भवता । स्तुताविति किं ? उपलभ्यमस्माद् वृषलात्किंचित् ।

* वाऽमुण्ण्योः ॥ ४८ ॥ लभेर्वा नुम्भवति अमुण्ण्योः परतः । लम्भलम्भ । लाभ लाभ । अलम्भि । अलाभि ।

* घञ्खे च गे ॥ ४९ ॥ गेः परस्य लभेर्नुम् भवति घञि खेऽमि णौ च परे । उपलम्भः । सुप्रलम्भः । प्रलम्भ प्रलम्भ । प्रालम्भिः । गेरिति किं ? लाभः । ईषल्लभ । अम्ण्योर्नित्यार्थं घञ्खेतु गेरेवेति नियमार्थं वचन जिज्ञासोपलम्भेनेति निर्देशान्न विपरीतो नियमः । गेः घञ्खेष्वेति ।

* सुदुर्भ्यः ॥ ५० ॥ सुदुर्भ्या व्यस्तसमस्ताभ्या गिभ्या गेः पराभ्या लभेर्घञि खे च नुम् भवति । अतिसुलम्भ । अतिदुर्लम्भः । अतिसुदुर्लम्भ । गेरिति किं ? सुलाभः । सुलभ । दुर्लाभ । दुर्लभ । सुलाभिः । दुर्लभिः । सुदुर्लभ । अतिसुलभमिति पूजायामतिक्रमे चार्थेऽतिः । सुदुर्भ्यो गेरेवेति नियमार्थं वचन ।

उगिदचा घेऽम्वादे ॥ ५१ ॥ उगिनाम्म्वादीना अचतेश्च घे नुम् भवति । गोमान् । गोमन्तौ । गोमन्तः । गोमन्त । गोमन्तौ । धनवान् ।

भगवतौ । धनवनः । पचन् । पचतौ । पचतः । प्राङ् । प्राचौ । प्राचः । अम्वादेरिति किं? उखा स्रत् । पर्णध्वत् । स्यादिप्रतिषेधाद्भवत्येवेह । गोमत्यते—गोमान् । गोमतौ ।

युजिरोऽसे ॥ ५२ ॥ युजिरो नुम् भवति असे घे परतः । युङ् । युञ्जौ । युञ्जः । युञ्जं । युञ्जौ । असे इति किं? अश्वयुक् । अश्वयुजौ । अश्वयुजः ।

नपोऽच ॥ ५३ ॥ नपोऽचन्तस्य घे नुम् भवति । वनानि । दधीनि । मधूनि । चारित्राणि । अच इति किं? विमलदिवि । बहुगिरि । अहानि ।

*झलां ॥ ५४ ॥ अचः परा या झल् जातिस्तदन्तस्य नपो घे नुम् भवति । सर्पींषि । धनूंषि । उदर्श्विति । काष्ठतक्षि ।

– प्राग्वाऽन्तः॥ ५५ ॥ झलन्तस्य नपोऽन्त्यझल्नातः प्राङ् नुम् भवति वा । महोर्ञ्जि । महोर्ज्जि ।

सुपीगोऽचि ॥ ५६ ॥ इगन्तस्य नप सु प्यचादौ परे नुम् भवति । वारिणी । त्रपुणी । वारिणा । त्रपुणा । सुपीति किं? तुम्बुरुणो विकारः तौम्बुरवं चूर्णं । इक इति किं? वने । अचीति किं? वारिभ्य ।

भादौ वोक्तपुम्क पुवत् ॥ ५७ ॥ इगन्त नपुंसकमुक्तपुंस्कं भाद्यजादौ पुवत् वा स्यात् । शुचि । साधुः । शुचि । साधु वृत्त । शुचये । शुचिने पलाय । ग्रामण्या । ग्रामणिना कुलेन । चार्त्रे । भारणे वस्त्राय । कर्त्रा । कर्तृणा कुलेन । अनिराया । भातिरिणा । चित्रगवे । चित्रगुणे । भादाविति किं? भाग्नी । उक्तपुंस्कमिति किं? जतुने ।

सख्यस्थिदध्यक्ष्णोऽन्ट् ॥ ५८ ॥ सख्यादीनामनट् भवति भाद्यजादौ परतः । सक्थ्ना । सक्थ्ने । अस्थ्ना । अस्थ्ने । दध्ना । दध्ने । अक्ष्णा । अक्ष्णे । अक्ष्णां । नपीति किं?

दधि नाम कश्चित् धानशीलो वा दधिरनेन दधिना

विदे शतुर्वसु ॥ ५९ ॥ विद परस्य शतुर्वसुर्भवति । विद्वान् । विद्वांसौ । विद्वांसः ।

न यात् ॥ ६० ॥ यात्परस्य शतुर्नुम् न भवति । ददत् । ददतौ । ददतः । जाग्रत् । जाग्रतौ । जाग्रतः ।

वा नप ॥ ६१ ॥ नपुंस्यात्परस्य शतुर्वा नुम् भवति । ददन्ति, ददति । जाग्रन्ति, जाग्रति कुलानि ।

शीम्योरात् ॥ ६२ ॥ शीम्योरवर्णान्तात् शतुर्वा नुम् भवति । तुदन्ती, तुदती । पान्ती, पाती कुले । तुदन्ती, तुदती । पान्ती, पाती स्त्री । आदिति किं? अदती । जानती स्त्री ।

शप्श्यात् ॥ ६३ ॥ आभ्या शतुर्नुम् भवति शी सु इत्येतयोः परत । नित्यार्थं वचनं । पचन्ती कुले । पचन्ती कन्या । दीव्यन्ती कुले । दीव्यन्ती कन्या ।

सावनडुहः ॥ ६४ ॥ अनडुह सौ परे नुम भवति । अनड्वान् ।

*द्यौः ॥ ६५ ॥ दिवः औत्व निपात्यते सौ परे । द्यौरारमते पुण्येन ।

पथिमथ्यृभुक्षामात ॥ ६६ ॥ पथ्यादीनामाद्भवति सौ परे । पन्थाः । मन्थाः । ऋभुक्षाः ।

एद्धे ॥ ६७ ॥ तेषामित्कारस्याद्भवति घे परतः । पन्थानौ । पन्थानः । पन्थानं । पन्थानौ । मन्थानौ । मन्थानः । ऋभुक्षाणौ । ऋभुक्षाणः ।

थो न्थः ॥ ६८ ॥ तेषां थकारस्य न्थादेशो भवति घ परे । पन्थाः । मन्था ।

भस्य टे ख ॥ ६९ ॥ तेषां भसंज्ञकानां टे ख भवति । पथः पश्य । पथा । पथे । मथः । मथा । ऋभुक्षः । ऋभुक्षा ।

पुंसोऽसुङ् ॥ ७० ॥ पुंसः असुङ् भवति घे परतः । पुमान् । पुमांसौ । पुमांसः । पुमांसं पुमांसौ ।

न ओतो णित् ॥ ७१ ॥ ओ तात्पर घे णिद्भवति ।

गौः । गावौ । गावः । द्यौः । द्यावौ । द्यावः ।

वाऽस्मण्णप् ॥७२॥ अस्मदो णप् वा णिद्भवति। चकार । चकर । विललाप। विललप ।

* सखितोऽकौ ॥ ७३ ॥ सखितः परं धं णिद्भवति अकौ परतः । सखायौ । सखायः । सखायं । सखायौ । तकार इति किं? इमे सख्यौ। अकाविति किं ? हे सखे ।

* डन्सौ ॥ ७४ ॥ तस्य डन् भवति अकौ सौ परतः । सखा ।

ऋदुशनस्पुरुदंशोऽनेहसां ॥ ७५ ॥ ऋकारांतानां उशनसादीनां च डन् भवति धे अकौ सौ परतः । कर्ता । दाता । पिता । माता । उशना । पुरुदंशा । अनेहा । अकाविति किं ? हे दातः । हे मातः । हे पुरुदंशः । हे अनेहः ।

÷ तृज्वत् क्रोष्टुः ॥ ७६ ॥ क्रोष्टुः तृजंतवद्भवति अकौ धे परतः। क्रोष्टा । क्रोष्टारौ । क्रोष्टारः । क्रोष्टारं । क्रोष्टारौ । अकाविति किं ? हे क्रोष्टो । ध इति किं ? क्रोष्टून् ।

+स्त्रियां ॥ ७७ ॥ क्रोष्टुः स्त्रियां तृज्वत् भवति । क्रोष्ट्री ।

÷वाऽच्यापि ॥ ७८ ॥ क्रोष्टुः तृज्वद्वा भवति अजादावापि भादौ परतः । क्रोष्ट्रा । क्रोष्टुना । क्रोष्ट्रे । क्रोष्टवे क्रोष्टोः। क्रोष्टुः। क्रोष्ट्रोः। क्रोष्ट्वो । क्रोष्ट्रनां। क्रोष्टरि,क्रोष्टौ । अचीति किं ? क्रोष्टुभ्यां । क्रोष्टुभिः । आपीति किं ? क्रोष्टून् ।

चतुरनडुहोर्वाः ॥ ७९ ॥ अनयोरुकारस्य वा भवति धे परतः । चत्वारः । चत्वारि । अतिचत्वाः । अतिचत्वारौ । अतिचत्वारः । अनड्वान् । अनड्वाहौ । अनड्वाहः । अनड्वाहं । अनड्वाहौ ।

वःकौ ॥ ८० ॥ तयोरुकारस्य वो भवति कौ परतः । हे अतिचत्वः । हेअनड्वन् ।

+ पुत्रेऽर्हे मातुः कपोऽड् ॥८१॥ वसे मातृशब्दात् परस्य कपो वा अड् भवति कौ परतः पुत्रेऽर्हे पुत्रप्रशंसायां । हेगार्गीमातः। पुत्र इति किं ? हेगार्गीमातृके पुत्रि । अर्हे इति किं ? गार्गीमातृक ।

÷वोशनोशनन् ॥८२॥ एतौ निपात्यौ कौ वा। हे उशन। हेउशनन्। हे उशनः। उशनसः सत्वं नत्वं च निपात्यते ।

ॠतामिद्धोः॥८३॥ ॠकारांतस्य घोरिकारादेशो भवति । किरति । गिरति । विस्तीर्णं । गीर्य्यते । घोरिति किं ? मातॄणां ।

उड्डः धोः ॥ ८४ ॥ उड्डः ॠत ईर्भवति । कीर्तयति । कीर्तयतः । कीर्तयंति ।

पुवादुत् ॥८५॥ पवर्गाद्वकाराच्च परस्य घोःॠतः उद्भवति । पूर्तः । प्रपुपूर्षति । बुभूर्षति । मुमूर्षति वुवूर्षति । मुनीन् ।

सावैप्मे ॥८६॥ मपरे सौ परे गोरैप् भवति। अनैषीत् । अहौषीत् । अलावीत् । अहार्षीत्। म इति किं ? अलविष्ट ।

व्रज्वल्लोऽतः ॥ ८७ ॥ व्रजिवदोर्लकारेफांतस्य च गोरत ऐप् भवति मपरे सौ परतः । प्राव्राजीत् । अवादीत् । अचालीत्। अचारीत् । व्रज्वल्ल इति किं ? मानिरशीत् । मानिरटीत् । अत इति किं ? न्यमीलीत् । न्यखोडीत् ।

हलामचः ॥ ८८॥ हलंतानामच ऐप् भवति मपरे सौ परतः । अभैत्सीत् । अच्छैत्सीत् । अरौत्सीत् । हलामिति किं ? गौरिवाचारीत्-अगवीत् । अच इति किं ? अधाक्षीत् । अनिकोऽपि यथा स्यात् ।

नेटि ॥ ८९ ॥ इडादौ मसौ परे हलंतस्य गोरच ऐप भवति । अदेवीत् । अकोषीत्। अकर्षीत् ।

*ह्म्यक्षणश्वसजागृणिश्व्येदितां ॥ ९० ॥ हकारमकारयकारांतानां क्षणादीनां च इडादौ .

मसावैन स्यात् । अग्रहीत् । अरहीत् । अवमीत् । अव्ययीत् । अक्षणीत् । अश्वसीत् । अवयीत् । अरगीत् । अल्गीत् ।

वोर्णुव ॥ ९१ ॥ ऊर्णुनो मसौ वैऽम्भवति । प्रौर्णावीत् । प्रौर्णुवीत् ।

अतोऽनादेर्येः ॥ ९२ ॥ अनादेरतो येर्वैऽम्भवति इडादौ मसौ परतः । अरुणीत् । अकाणीत् । अरणीत् । अराणीत् । अचणीत् । अचाणीत् । अत इति किं? असेवीत् । अनादेरिति किं? मानिरटीत् । येरिति किं? अरक्षीत् ।

*वलादेरिट् ॥९३॥ वलादेरर्थादगस्य इडागमो भवति । पविता । पवितु । पवितव्यं । भविता । भवितु । भवितव्य । एधितव्य । वलादेरिति किं? लव्य । लवनीयम् । अगस्येति किं? आस्ते । शेते ।

। ग्रहादेः क्ते ॥९४॥ ग्रहादिभ्यः परस्य वलादेः क्तेरिड् भवति । निगृहीति । उदितिः । भणितिः । दीधितिः । मथितिः । लिखितिः । पठिति ।निकुचिति ।ग्रहादेरेव क्तेरिति नियमोऽयं । तेन—विभूतिः । दीप्तिरित्यादि ।

*ग्रहोऽलिट्येकाचो दीः ॥९५॥ ग्रहेरेकाचः परस्य इटो दीर्भवत्यलिटि परतः । ग्रहीष्यति । ग्रहीता । ग्रहीतु । ग्रहीतव्य । अलिटीति किं? जगृहिव । जगृहिम । एकाच इति किं? जरीगृहिता जरीगृहितु ।

* वृतो वाऽलिमसौ ॥ ९६ ॥ वृङ्वृञ्भ्या ऋकारान्तेभ्यश्च वा इटो दीर्भवति अलिड्लिट् मसिषु परतः । वरिता । वरीता । प्रावरिता । प्रावरीता । तरिता । तरीता । जरिता । जरीता । निगरिता । निगरीता । अलिमसाविति किं? वरिषीष्ट । प्रावरिषीष्ट । निगरिषीष्ट । प्रावरिथ । तेरिव, तेरिम । प्रावारिष्टा।अतारिष्टा । अस्तारिष्टां । न्यगारिष्टा । न्यगारिषुः ।

सनीट् ॥९७॥ सनि परे वृत इड् वा भवति । वुवूर्षते । विवरिषते । विवरीषते । प्रावुवूर्षति । प्राविवरिषति । प्राविवरीषति । तितीर्षति । तितरिषति । तितरीषति । आतिस्तीर्षति । आतिस्तरिषति । आतिस्तरीषति ।

लिङ्स्योर्दे ॥९८॥ वृद्भ्य परयोर्लिङ्स्योरिड् वा भवति दे । लिङ्—वृषीष्ट । वरिषीष्ट । आस्तीर्षीष्ट । आस्तरिषीष्ट । अवृत । अवरिष्ट । अवरीष्ट । प्रावृत । प्रावरिष्ट । प्रावरीष्ट । आस्तीर्ष्ट । आस्तरिष्ट । आस्तरीष्ट । द इति किं? प्रावारिषु । अतारीत् ।

* स्फाद्दतोऽम्बु ॥ ९९ ॥ स्फादस्तुपराद् ऋकाराल्लिङ्स्योर्दे वेड् भवति । स्मृषीष्ट । स्मरिषीष्ट । ध्वृषीष्ट । ध्वरिषीष्ट । अस्मृषाता । अस्मरिषाता । अध्वृषाता । अध्वरिषाता । अस्कुरिति किं? संस्कृषीष्ट । समस्कृत ।

*रधादिध्नुः ॥१००॥ रधादेर्द्वयो धूञश्चोत्तरस्य वलादेर्वेड् भवति । रद्धा । रधिता । नष्टा । नशिता । नङ्क्ष्यति । नशिष्यति । उपगोढा । उपगूहिता । विधोता । विधविता । धोष्यति । धविष्यति ।

निस्कुष ॥१०१॥ निरपूर्वात् कुष इड् वा स्यात् । निष्कोषिता । निष्कोष्टा ।

इट् ते॥१०२॥निस्कुष तसञ् परे इट भवति। निष्कुषितः।निष्कुषितवान् ।

तीछसहलुभरुषरिषः ॥१०३॥ एभ्यो वेड् भवति तकारादौ परतः। एष्टा । एषिता । एष्टु । एषितु।एष्टव्य।एषितव्य । सोढा।सहिता । लोब्धा । लोभिता । रोष्टा । रोषिता । रेष्टा । रेषिता । तीति किं? सहिष्यते ।

सनीवतर्दभ्रस्जदम्भुश्रियूर्णभरज्ञपि

सतन्पतेः ॥१०४॥ इवतादीना ऋधादीना च सनि परे वेड् भवति । दुद्यूषति । दिदेविषति । सुस्यूषति । सिसेविषति । ईर्त्सति । अर्दिधिषति । विभ्रक्षति । विभर्क्षति । विभ्रज्जिषति । विभार्जिषति । धिप्सति । धीप्सति । दिदम्भिषति । सुस्वूर्षति । सिस्वरिषति । शिश्रीषति । शिश्रयिषति । युयूषति । यियविषति । प्रोर्णुनूषति । प्रोर्णुनविषति । प्रोर्णुनुविषति । बुभूर्षति । बिभरिषति । ज्ञीप्सति । जिज्ञपयिषति । सिषासति । सिषनिषति । तितंसति । तितासति । तितनिषति । पित्सति । पिपतिषति ।

पूङ्क्लिशस्तक्त्वोः ॥ १०५ ॥ पूङ्क्लिशिभ्या परयोस्तक्त्वो वेड् भवति । पूतः । पवितः । पूतवान् । पवितवान् । पूत्वा । पवित्वा । क्लिष्टः । क्लिशितः । क्लिष्टवान् । क्लिशितवान् । क्लिष्ट्वा । क्लिशित्वा ।

क्षुध्वस इट् ॥ १०६ ॥ आभ्या तक्त्वोरिड् भवति । क्षुधितः । क्षुधितवान् । क्षुधित्वा । क्षोधित्वा । उषितः । उषितवान् । उषित्वा ।

* अचोऽर्चे ॥ १०७ ॥ अचेरर्चाया तक्त्वोरिड् भवति । अंचितं । अंचितवान् । अंचित्वा गुरून् गतः। अर्च इति किं ? उदक्तमुदकं कूपात् । अक्त्वा ।

स्वार्थे लुभात् ॥ १०८ ॥ स्वार्थे विमोहने वर्तमानाल्लुभात् तक्त्वोरिड् भवति । विलुभिताः सीमन्ताः । विलुभिताः केशाः । लोभित्वा । लुभित्वा । स्वार्थ इति किं ? लुब्धो न लभते पुण्यं ।

जृव्रश्चः क्त्वः ॥ १०९ ॥ आभ्यां क्त्वास्यस्य इड् भवति । जरित्वा, जरीत्वा । व्रश्चित्वा ।

वोदितः ॥ ११० ॥ उदितः परस्य क्त्वास्यस्य वेड् भवति । शान्त्वा । शमित्वा । दान्त्वा । दमित्वा ।

* क्वस्वेकाज्घसः ॥ १११ ॥ आकारान्तात् एकाचो घसश्च क्वसो इट् भवति । पपिवान् । तस्थिवान् । आटिवान् । पेठिवान् । जक्षिवान् । एकाजिति किं ? बभूवान् । बिभिद्वान् ।

* गम्हन्विदृदृश्विशो वा ॥ ११२ ॥ गमादेः क्वसौ परतो वेड् भवति । जग्मिवान् । जगन्वान् । जघ्निवान् । जघन्वान् । विविदिवान् । विविद्वान् । ददृशिवान्, ददृश्वान् । विविशिवान् । विविश्वान् ।

स्यसौ कृच्चृच्छृतृन्नृतः ॥ ११३ ॥ एभ्यः सिवर्जितसकारादावगे परत वेड् भवति । कर्त्स्यति । कर्तिष्यति । अकर्त्स्यत् । अकर्तिष्यत् । चिकृत्सति । चिकर्तिषति । चर्त्स्यति । चर्तिष्यति । अचर्त्स्यत् । अचर्तिष्यत् । चिचृत्सति । चिचर्तिषति । छर्त्स्यति । छर्दिष्यति । अछर्त्स्यत् । अच्छर्दिष्यत् । चिच्छृत्सति । चिछर्दिषति । तर्त्स्यति । तर्दिष्यति । अतर्त्स्यत् । अतर्दिष्यत् । तितृत्सति, तितर्दिषति । नर्त्स्यति । नर्तिष्यति । अनर्त्स्यत् । अनर्तिष्यत् । निनृत्सति । निनर्तिषति । सीति किं ? कर्तिता । नर्तिता । असाविति किं ? अछर्दीत् । अनर्तीत् ।

गमेः ॥ ११४ ॥ गमेः सकाराद्यगस्य वेड् भवति । सञ्जिगमिषिता । सञ्जिगंसिता । अधिजिगमिषिता । अधिजिगांसिता व्याकरणस्य । सीति किं ? गता ।

* मस्य ॥ ११५ ॥ गमेर्मनिमित्तस्य सकारादेरिड् भवति । गमिष्यति । अगमिष्यत् । जिगमिषति । अधिजिगमिषति । म इति किं ? सञ्जिगंसते वत्सो मात्रा ।

न वृद्भ्यः ॥ ११६ ॥ वृतादेः परस्य मस्य नेड् भवति । वर्त्स्यति । विवृत्सति । सर्त्स्यति । सिसृत्सति । स्यन्त्स्यति । सिस्यन्त्सति । कल्प्स्यति । चिक्लृप्सति । कल्प्तासि । म इति किं ? वर्तिष्यते । कल्पिष्यते । कल्प्स्यते ।

*वाऽस्त्वदृगृह्ज्ञदृशोऽनिसानिट्तासस्येऽस्क-

भ्यार्चे: ॥ ११७ ॥ नित्यानिट्नाम्य अकार-वद्भ्योऽजतेभ्यः सृजदृशिभ्या च थे वेड् भवति क्रादीन्विहाय । पक्ता । पपक्थ । पेचिथ । शक्ता । शशक्थ । शेकिथ।याता । ययाथ । ययिथ । नेता । निनेथ । निनयिथ । स्रष्टा । सस्रष्ट । ससर्जिथ । द्रष्टा । दद्रष्ट । ददर्शिथ । अत्वदृत्र सृजदृश इति किं ? भेत्ता । बिभेदिथ । नित्यग्र हण किं ? अक्ता । अंजिता । आनंजिथ । अनिट् ग्रहण किं ? लविता । लुलविथ । तासग्रहण किं ? जयसिथ । थ इति किं ? पेचिव । पेचिम । अन्यड्-व्यार्चेरिति किं ? सस्कर्त्ता । सस्करिथ । अत्ता । आ दिथ । व्याता । विव्यायिथ । अर्त्ता । आरिथ ।

ऋत ॥ ११८ ॥ ऋदन्तात्तासि नित्यानिट् तासन्थे नेड् भवति । वर्त्ता । चवर्थ । हर्त्ता । जहर्थ । स्मर्त्ता । सस्मर्थ ।

*गमस्तोर्दे ॥ ११९ ॥ गमुन्नुभ्या वलादे-रगस्य दे सति नेड् भवति।गमिगम्यते। सञ्जिगमते। अधिजिगामते।प्रम्नोष्यते।प्रम्नोष्यमाण।प्राम्नोष्ट।

क्रमेः ॥ १२० ॥ क्रमे परस्य नेड् भवति दे । प्रक्रम्यते । प्राक्रम्त । प्रचिक्रंसते। द इति किं ? क्रमिता ।

*तुः ॥ १२१॥ दे विषये क्रमेः परस्य तुर्नेड् भवति । प्रक्रन्ता । उपक्रन्ता ।

वशि ॥ १२२ ॥ घोषवत्यादौ परे नेड् भवति। ईश्वरः।दीप्रः। भस्म । दडः । मुद्रः । गर्गः । वशीति किं ? ईशिता ।

*लौदिदचोऽपचिश्विश्रिगोढीरपट्‌स्नोवृत्त ॥ १२३ ॥ लकारान्तरेद्भ्योऽन्तेभ्यश्च एका च्भ्यो विहितस्य वलादेर्नेड् भवति पतादीन्विहाय। गन्ता । शक्ता । नन्ता । वेत्ता । चेता । याता । दाता । नेता । स्तोता।कर्त्ता । पतादिवर्जनं किं ? पतिता । श्वयिता । श्रयिता । डायिता।डयिता।

रविता । क्षविता । क्षणदिता । स्नविता । नविता। यविता । भविता । लविता । वरिता । वरीता। प्रावरिता । प्रावरीता । तरिता । तरीता।परिता । परीता । आचधिर्षीष्टएकाच इति किं ? प्रोर्णविता। निमेदिता । चिच्छेदिता । जागरिता ।

*क्तिचत्रोणादेः ॥१२४॥ एषा नेड् भवति। शान्तिः । तति । पोत्र । शस्त्र । जतुः । दस्म । अक्षर । हस्तः । वर्तिरा । पत्तनं । कुक्षिः । इक्षु । शर्करा । शस ।

*श्व्यूर्णुजूश्रुयुरू ॥ १२५ ॥ एभ्यः क्तिति नेड् भवति । प्रोर्णुतः । प्रोर्णुतवान् । श्रित । श्रितवान् । श्रित्वा । श्रितिः । युतः । युतवान् । युत्वा । युतिः । रुतः । रुतवान । रुत्वा । रुति । प्ररुतः । प्ररुतवान् । क्तिदीति किं ? श्रयिता । ऊर्णादेरिति किं ? श्रयित्वा । एकाच इति किं ? जागरितः । जागरितवान् ।

सनि ग्रहगुहश्च ॥ १२६ ॥ ग्रहगुहाभ्या उगतेभ्यश्चैकाच्च सनि नेड् भवति । निघृक्षति । जुघुक्षति । रुरूषति । लुलूषति ।

भृसृस्तुद्रुस्रुश्रोर्लिटि॥१२७॥एभ्यो लिटि नेट् भवति । बभृवावभृम । सस्रुव । सस्रुम । बभृवहे । बभृमहे । स्रुव । स्रुम । तुष्टुव । तुष्टुमातुष्टोथादुद्रुवादुद्रुमादुद्रोथाशुश्रुव।सुस्रुम । सुस्रोथ । शुश्रुव । शुश्रुम । शुश्रोथ । सिद्धे स-त्यारभो नियमार्थः । आदय एव लिट्यनिटो नान्यादादिव । ददिम । बिभिदिव । बिभिदिम ।

*कृञोऽसुटः ॥ १२८ ॥ कृञ असुटो लिटि नेड् भवति । चकृव । चकृम । असुटिति किं ? सचस्करिव । सचस्करिम ।

*दीयशीङ्डीड्‌भ्योऽपतस्ते ॥ १२९ ॥ दीय श्विभ्या ईदिद्भ्यो विभाषेड्भ्यश्च पति त्यस्य क्त परे नेड् भवति । दीनः । दीनवान् । शूनः ।

शूनवान् । पीन । पीनवान् । लग्न । लग्नवान् । इष्टः । इष्टवान् । धूतः । धूतवान् । अपत इति किं ? पतितः । पतितवान् ।

सन्निविभ्योऽर्दे ॥१३०॥ सनिविपूर्वादर्दे स्ते नेड् भवति । समर्ण ।न्यर्णः । व्यर्णः । समर्दितेति किं ? प्रार्दित ।

*अविदूरेऽभेः ॥ १३१ ॥ अभिपूर्वादर्देरविदूरेऽर्थे ते नेड् भवति।अभ्यर्णा सरित्।अभ्यर्णे शेते । अविदूर इति किं ? अभ्यर्दितश्चौर शीतेन ।

*शस्धृषः प्रगल्भे ॥ १३२ ॥ आभ्यां प्रगल्भेऽर्थे ते नेड् भवति।विशस्तो वादी।धृष्टो वादी। प्रगल्भ इति किं ? विशसितः । धर्षित ।

*कृप कृच्छ्रगहने ॥ १३३ ॥ कृच्छ्रगहनयोस्ते कपेर्नेड् भवति।कष्ट गणित । कष्टं वन । कषितमन्यत्र ।

*दृढ बलिस्थूले ॥ १३४ ॥ दृढमिति निपात्यते बलिनि स्थूले च ते परतः।दृढो बलवान् स्थूलश्च । अनिट्त्वनहस् तढत्वं च निपात्यते । दृंहित । दृहितमन्यत्र ।'

* क्षुब्धस्वांतध्वातलग्नम्लिष्टघुष्टविरिब्धफांटवाढपरिवृढ मथमनस्तम सक्ताविस्पष्टा-विशब्दस्वरानायासभृशप्रभौ ॥ १३५ ॥ क्षुब्धादयो निपात्यते मंथाद्यर्थेषु । क्षुब्धो मथाः स्वान्त तमः । ध्वान्तः सक्त । म्लिष्टमविस्पष्ट म्लेछेरनिट्त्वमेकारस्येत्वच । घुषिरविशब्दने । घुष्टा रज्जुः । घुष्टो पाटो । विरिब्धः स्वरः । विपूर्वस्य रेभृंडोऽनिट्त्वमित्व च । फाटमनायास । वाढ भृश । परिवृढः प्रभुः । अन्यत्र क्षुभित । स्वनित । ध्वनितं । लगित । म्लेछित । अवघुषित वाक्य । विरेभित । फाणित । वाहित । परिवृंहितमिति ।

आदितः॥ १३६ ॥ आकारेतो धोस्ते नेड् भवति । मिन्न ।मिन्नवान् । क्ष्विन्नः । क्ष्विन्नवान् । क्ष्विण्णः । क्ष्विण्णवान् ।

वा भावारंभे ॥ १३७ ॥ भावे आरभे च आदित ते वा नेड् भवति । मिन्नमस्य मेदितमस्य। प्रमिन्नः । प्रमेदितः ।

*शकेः कर्मणि ॥१३८॥ शकेः कर्मार्थे ते वा नेड् भवति । शक्तो घटः कर्तुं, शकितो घटः कर्तुं । कर्मणीति किं ? शक्तो देवदत्त ।

*हृषेर्लोमविस्मयप्रतिघाते ॥१३९॥ हृषेर्लोमाद्यर्थेषु ते वा नेड् भवति। हृष्टानि। हृषितानि लोमानि । हृष्ट देवदत्त । हृषित देवदत्तः । हृष्टा, हृषिताः दताः ।

*जप्तशस्तापचिताश्च ॥१४०॥ जप्तादयो निपात्यते । जप्तः जपितः । श्वस्तः । श्वसितः। अपचितः । अपचायितो गुरुः । चायतेश्चिः । चशब्दादपचितिरिति भवति ।

दांतशांतपूर्णदस्तस्पष्टछन्नज्ञप्ता ॥१४१॥ दान्तादयःशब्दाःकृतणिराः अनिटो वा निपात्यते। दातः, दमितः । शातः, शमितः । पूर्णः, पूरितः । दस्त , दासितः । स्पष्टः । स्पाशितः। छन्न , छादितः । ज्ञप्त । ज्ञापित ।

*वृत्तोऽधीतो॥१४२॥ वृत्त इति वृतेर्ण्यंतस्य निपात्यते अधीतेऽर्थे । वृत्तं जैनेन्द्र । वृत्तम्तर्क । अनिट्त्व णेरुप्च । वर्तितमन्यत्र ॥

वा रुष्यमत्वरसघुषास्वन्यमः ॥१४३॥ रुष अम् त्वर सघुष् आस्वन् वम् इत्येतम्यस्ते वेड् भवति । रुष्टः, रुषितः । अभ्यंत। अभ्यामित । तूर्णः, त्वरित । सघुष्ट । संघुषितः पाद । संघुष्टं । संघुषित वाक्य । आस्वांतः, आस्वानितो देवदत्तः । आस्वांत । आस्वनित मन । वातः, वमितः ।

*ऋद्घ्न इट् स्ये ॥ १४४ ॥ ऋदेतेभ्यो

हनश्चेड् भवति स्ये परे । करिष्यति । अकरिष्यत् करिष्यमाण । हरिष्यति । स्वरिष्यति । हनिष्यति ।

*सायञ्जेः ॥१४५॥ अञ्जेः सौ परे इड् भवति आञ्जीत । आञ्जिष्टाम् । आञ्जिषुः ।

स्तुसुधूञ्भ्यो मे ॥१४६॥ एभ्यो मसाविड् भवति । अस्तावीत् सुसुनाथ । असावीत् । असावीत् । म इति किं ? अस्तोष्ट ।

यमरमनमातां सक् च ॥१४७॥ एषां मसाविट् सक्चागम । अयंसीत् । अयंसिष्टाम् । अयंसिषुः । व्यरंसीत् । व्यरंसिष्टाम् । व्यरंसिषुः । अनंसीत् । अनंसिष्टाम् । अयासीत् । आयासिष्टाम् । अपासीत् । अदासीत् ।

स्मिङ्पूङ्रञ्ज्वशः सनि ॥१४८॥ एतेभ्यः सनीड् भवति । सिस्मयिषते । पिपविषते । अरिरिषति । अजिजिषति । अशिशिषते ।

*किरश्च ॥ १४९ ॥ किरादिभ्यः सनीड् भवति । उचिकरिषति । निजिगरिषति । दिदरिषते । दिधरिषते । पिपृच्छिषति । चशब्दात् जुगुहिषन्मत्तगनोऽभ्यधावत् ।

रुद्भ्यो गे ॥१५०॥ रुदादिभ्यः गे इड् भवति । रोदिति । रुदितः । स्वपिति । स्वपितः । प्राणिति । प्राणितः । श्वसिति । श्वसितः । जक्षिति । जक्षितः । ग इति किं ? स्वप्ता । स्वप्नुः । स्वप्तव्य । वलादेरिति किं ? रुदति । स्वपति ।

*ईड स्ध्वे ॥१५१॥ ईडः सकारादौ ध्वे च परे इट् भवति । ईडिषे । ईडिध्वे । ईडिष्व । ईडिध्वम् ।

ईशः ॥१५२ ॥ ईश सकारे ध्वे च परे इट् भवति । ईशिषे । ईशिध्वे । जनेरध्वेति केचित् व्यतिजज्ञिषे । व्यतिजज्ञिध्वे ।

लिङोऽनन्त्यसस्य ॥१५३॥ लिङः अनन्त्यस्य सकारस्य ग स्यात् । कुर्यात् । चिनुयात् । चिनुयाताम् । चिनुयुः । कुर्वीत । चिन्वीत । अनन्त्य इति किं ? कुर्याः । कुर्युः । गे इति किं ? क्रियासुः । कृषीष्ट ।

अतो येय् ॥१५४॥ अदन्तात्परस्य या इत्यस्य इय् भवति । पचेत् । नन्देत् । दीव्येत् । तकारः किं ? यायात् ।

*आतोऽपः ॥१५५॥ अत परस्य पित्वर्जितस्यात इय् भवति । पचेते । पचेथे । पचेता । पचेथा । अप इति किं ? पचावहै । पचामहै ॥

आने मुक् ॥१५६॥ गोऽकारात्तस्य मुगागमो भवति आने परतः । यजमानः । पचमानः । वर्द्धमान ।

ईदासः ॥१५७॥ आसः परस्यानस्य ईद्भवति । आसीनोऽधीते । आसीनो भुङ्क्ते ।

*सुप्याप्त्नः ॥१५८॥ अप्त्नन्तदन्तस्य च गोराकारादेशो भवति सुपि परे । अप्ताभिः । अप्ताभ्यः । अप्तासु । प्रियाप्ताः । प्रियाप्ता । प्रियाप्तौ । प्रियाप्तानौ । प्रियाप्तौ । प्रियाप्तानः । प्रियाप्ताम् । प्रियाप्तान । प्रियाप्तौ । प्रियाप्तानौ । प्रियाप्तौ । प्रियाप्त्नः । प्रियाप्त्ना । प्रियाप्त्ना । प्रियाप्ताभ्या । प्रियाप्ताभिः । प्रियाप्ते । प्रियाप्त्ने । प्रियाप्तः । प्रियाप्त्नः । प्रियाप्त्नोः । प्रियाप्तोः । सुपीति किं ? अप्तृत्वर्मघाती निनः ।

*रायः भि ॥१५९॥ रै इत्यस्यात्र भवति सकारभकारादौ सुपि परतः । ग । राभ्यां । रासु । प्रियरि । प्रियराभ्यां । प्रियरासु ।

*युष्मदस्मदो ॥१६०॥ अनयोरात्वं भवति सकारभकारादौ सुपि परत । युष्माभिः । अस्माभिः । युष्मासु । अस्मासु ।

*आविपि ॥१६१॥ युष्मदस्मदोरात्वं भवति औकारे इपि च परत । युवां । आवां । त्वा । मामित्यादि ।

य ॥१६२॥ तयोर्यो भवति सुपि परत । त्वया । मया । त्वयि । मयि । युवयोः । आवयोः

स्वमादेशे ॥१६३॥ आदेशे सुपि तयोः स्व भवति। त्व। अह। त्वद्। मद्। युष्मद्। अस्मद्।

मो वा ॥१६४॥ मकारांतयोस्तयोः स्व भवति वा आदेशभूते सुपि । युष्मानाचक्षाणेभ्य युष्मभ्य । युषभ्य । अस्मभ्य । असभ्य । मावधेर्ये विधयस्ते परत्वात् भवति । युष्मद् । युषद् । अस्मद् । असद् । युष्माक । युषाक । अस्माक । असाक ॥

मावधे ॥१६५॥ तयोर्मकारावधे सघात स्यादेशा भवति इत्येषोऽधिकारो वेदितव्य । तत्रैवोदाहरिष्याम ।

युवावौ द्वौ ॥१६६॥ तयोर्मावधेर्युवावादेशौ स्तः द्वौ परतः । युवा । आवा । युवाभ्या । आवाभ्या ।

* त्वमौ त्ययौ चैके॥१६७॥ एकार्थे वर्तमानयोर्युष्मदस्मदोर्मावधेस्त्वामावादेशौ स्त सुपि त्ये यौ च एकत्वे । त्वयि । मयि । त्वदीय । मदीय । त्वत्तर । मत्तर । त्वच्छिष्य । मच्छिष्य त्वत्पुत्र । मत्पुत्र ।

त्वाहौ सौ ॥१६८॥ युष्मदस्मदो त्वाहौ भवत सौ परे । त्व । अह ।

यूयवयौ जसि ॥ १६९ ॥ तयोर्यूयवयौ भवत जसि परे । यूय वय ।

तुभ्यमह्यौ ङयि॥१७०॥तयोस्तुभ्यमह्यौ स्तः ङयि परे । तुभ्य । मह्य ।

तवममौ ङसि ॥ १७१ ॥ तयोस्तवममावादेशौ स्त ङसि परे । तव स्व । मम स्व ।

त्रिचतुरः स्त्रियां तिसृचतसृ ॥ १७२ ॥ त्रिचतुरो स्त्रिया वर्तमानयो तिसृचतसृ इत्येतावादेशौ भवत सुपि । तिसृभि । तिसृभ्य ।तिसृषु चतसृभि। चतसृभ्यः । चतसृषु ।

राऽचि ॥ १७३ ॥ तिसृचतस्रो ऋकारस्य रेफो भवत्यचि परतः । तिस्रः सति । तिस्रः पश्य । चतस्रो याति । चतस्रो नय ।

+वाऽस्पेर्ड्योटि ॥ १७४ ॥ तिसृचतसोरसख्यावाचिनोः ऋकारस्य रेफो भवति वा डा-औटि च परत । प्रियतिस्रि । प्रियतिसरि । प्रियचतस्रि । प्रियचतसरि । प्रियतिस्रौ । प्रियतिसरौ । प्रियचतस्रौ । प्रियचतसरौ । प्रियतिस्रः । प्रियतिसरः । प्रियचतस्र । प्रियचतसरः । प्रियतिस्र । प्रियतिसर । प्रियचतस्र । प्रियचतसर ।

*जराया ङस्॥१७५॥ सुप्यजादौ परे जराया वा ङस् भवति।जरे,जरसे।जरा जरस ।जरा,जरस । जरे जरसौ । जरा , जरस ।जरया । जरसा ।

त्यदादेर ॥ १७६ ॥ त्यदादीनामत्वं भवति सुपि परतः।स्य ।त्यौ । त्ये । सः।तौ।ते।द्वौ।

किमः कः ॥ १७७ ॥ किमः को भवति सुपि परे। कः । कौ । के।

*कुस्तसो ॥१७८॥ किम कुर्भवति तकारादावाशि च परत । कुत । क ।

*तोः सोऽनन्ते सौ ॥ १७९ ॥ त्यदादेः तवर्गस्यानन्ते वर्तमानस्य सो भवति सौ परे । स्य । सः । एषः । अनत इति किं ? यः । सः ।

असौ ॥ १८० ॥ असावित्यदस औत्व सोश्च स्व निपात्यते । असौ ।

+वाऽमुक ॥१८१॥ अमुक इत्यदसोऽकोऽकारस्योत्व वा निपात्यते सो परे। अमुकः।असकौ ।

इदमो मः॥ १८२ ॥ इदमः मकारो भवति सौ परे । इय । अय ।

दः ॥ १८३ ॥ इदमो दकारस्य मो भवति सुपि । इमौ । इमे।इमा। इमाः । इमे।इमानि ।

य सौ ॥ १८४ ॥ इदमो दकारस्य यो भवति सौ परे । इय ।

पुसीदोऽय् ॥ १८५ ॥ इदमः इदूरूपस्या य् भवति पुंसि सौ । अय ।

*टौस्यनोऽकः ॥ १८६ ॥ इदमः ककार हीनस्येदः अनादेशो भवति टौसि परे । अनेन । अनया ।अनयोः।अक इति किं'इमकेनाइमकयोः।

हलि ख ॥ १८७ ॥ इदमोऽककारस्येदः ख भवति हलादौ सुपि परत । आभ्या । एभि । एभ्यः। आभिः। एषा । आसा । एषु । आसु । अक इति किं'इमकाभ्या । इमकेभ्य ।

*अन्वादेशेऽश ॥ १८८ ॥ इदमोऽश भवति अन्वादेशे कथितानुकथने हलादौ सुपि परे । इमकाभ्या छात्राभ्या रात्रिमुषिता । अथो आभ्या हिंसा च कृता । इमकस्य छात्रस्य कुल मशोभन अथोऽस्य शीलमपि । इमकस्य राज्ञो जनपदो दुर्विनीतः। अथोऽस्य भृत्याश्च अवश्याः।

*टौसिप्येतदश्चैनत् ॥ १८९ ॥ इदमः एत दश्च एनद्भवति अन्वादेशे टा—ओस्—इप् इत्येतेषु परतः । अनेन छात्रेण रात्रिरधीता अथो एनेनाहरप्यधीत । एतेन छात्रेण रात्रिरधीता । अथो एनेनाहरपि । अनयो छात्रयो शोभन शील। अथो एनयोः रूपमपि । एतयो. छात्रयो शोभन शील अथो एनयोरूपमपि । इम छात्र जैनेंद्रमध्यापय अथो एन छंदोपि । एत छात्र काव्यमध्यापय—अथो एन तर्कमपि । सु शीलाविमौ । अथो एनौ जगत् मानयति । दुष्टा एतौ । अथो एनौ लोको निंदति । धार्मिका इमे देवा अप्येनान् नमस्यति । विनीता एते अथो एनान् पूजयति । इद सर भ्रमरा सेवते। अथो एनद्विहगाश्च । एतत् कुल्मर्थिनः सेवते अथो एनन्मित्राणि च । अन्वादेश इति किं ' देवदत्त मध्यापय इम च छात्र पश्य ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकाया वृत्तौ पचमस्याध्यायस्य प्रथम पादः ।

## द्वितीयः पादः ।

मृजेरैप् ॥ १ ॥ मृजेर्गोरैव् भवति । मार्ष्टि । मार्ष्टा । मार्ष्टुं । मार्ष्टव्य । मार्जिता । मार्जितु । मार्जितव्यम् ।

क्ङित्यचि वा ॥ २ ॥ क्ङित्यजादौ मृजे रैव्वा भवति । समृजति । समार्जति । परिम मृजतु । परिममार्जतु । क्ङितीति किं'मार्जन । अचीति किं ' मृष्ट । मृष्टवान् ।

ञ्णित्यचः॥३॥ अजतस्य ञ्णित्यैप् भवति । प्राकारः । अध्याय । गौः । गावौ । गाव । सखायौ । सखायः ।

उडोऽतः ॥४॥ उडोऽकारस्यैब्भवति ञ्णिति परतः। अपाचि । पाचक । पाठकः । पाकः । पाठः। अत इति किं ' भेदक ।

हृत्यच्स्वादेः ॥५॥ अचामादेरच एब्भवति। ह्रति ञ्णिति परे । नैपुष्टिः। औत्स ।भागः।नतः।

देविकाशिंशपादीर्घसत्रश्रेयसामा ॥ ६ ॥ देविकादीनामादेरच ऐठभवत्याकार । देविकाया भव दाविकमुदक । शिंशपायाः विकारः शाशप भस्स । दीर्घसत्रे भव दार्घसत्र पुण्य । श्रेयो, ऽधिकृत्य कृतो ग्रथः श्रायस, स्याद्वादः ।

×वहीनरस्यैः ॥७॥ वहीनरस्यादेरच ऐकारो भवति । वहीनरस्यापत्य वैहीनरिः ।

केकयमित्रयुप्रलयाना यादेरिय् ॥ ८ ॥ एषा यकारादेरिय् भवति ह्रति ञ्णिति परतः । केकयस्यापत्य कैकेयः । मित्रयोर्भाव. मैत्रेयिका श्लाघते । प्रलयादागत प्रालेयमुदक ।

पदे य्व ऐयौव् ॥९॥ पदे परतोऽच्यादेरचः स्थाने कृतयोर्यकारवकारयो ऐयौव् इत्येता वादेशौ भवतः ह्रति ञ्णिति परतः । वैयाकरणः ।

नैयायिकः । सौवागम । स्वर्हता प्रोक्तं सौवर्हतं तत्त्वं । पद इति किं ? यत इमे शिष्या यातः । स्य इति किं ? स्वाश्वः । अश्वादेरिति किं ? अभ्य- जनेन चरति—आभ्यजनिकः ।

द्वारादेः ॥१०॥ द्वारादीनां य्व ऐयौव् स्तः इति ञ्णिति परत । द्वारे नियुक्तः दौवारिकः । द्वारपालस्यापत्यं दौवारपालिकः । स्वरेण चरति सौवरिकः । सौवाध्यायिकः । व्यल्कसे भवः वैयल्कसः ।

न्यग्रोधस्यैकस्य ॥ ११ ॥ न्यग्रोधस्य एक- स्य केवलस्य यो यकारस्तस्य ऐप् भवति । न्य- ग्रोधस्याय नैयग्रोधो दडः । एकस्येति किं ? न्यग्रोधि- काया भवः न्याग्रोधिकः ।

*व्यग्वंगादेः ॥ १२ ॥ अत्यातस्य व्यगादीनां चादेरचः ऐज्भवति इति । परस्पर व्यवक्रोशन व्यवक्रोशी । व्यापहासी । व्यापचर्ची वर्तते । व्यागि । स्वागि । व्यवहारेण चरति—इति व्यावहारिकः ।

*श्वादेरौ ॥ १३ ॥ श्वन्शब्दादेरिकारादौ इत्यचामादेरैज्भवति । श्वकर्णस्यापत्य श्वाकर्णिः । श्वादंष्ट्रिः । श्वागणिकः । औ इति किं ? श्वादंष्ट्राया विकारः शौवादंष्ट्रो मणिः ।

* इमः ॥१४॥ इजन्त्यातस्य श्वादेर्ह्रत्यैज्भवति । श्वाकर्णेरिदं श्वाकर्णं । श्वाभस्त्र । इञ इत्यत्र ।

*वा पदस्यानौ ॥ १५ ॥ पदशब्दातस्य श्वादेरनिकारादौ इत्यैप् स्याद्वा । श्वापदानां समूहः श्वापदं । शौवापदं । अनौ इति किं ? श्वापदै- श्चरति श्वापदिकः ।

*प्रोष्ठभद्राज्जाते ॥ १६ ॥ आभ्यां परस्य पदस्याद्योदैरैज्भवति जातेऽर्थे । प्रोष्ठपदासु जातः प्रोष्ठपाद । भद्रपाद बालकः । जात इति किं ? प्रोष्ठपेदासु भवः प्रौष्ठपदः । भाद्रपदो मेघ ।

अशाद्दतो ॥ १७ ॥ अशादवयवात्प- रस्य ऋतुवाचकस्यादेरच ऐप् स्यात् ञ्णिति परत । पूर्वासु वर्षासु भवः पूर्ववार्षिकः । अपरवार्षिकः । पूर्वशारदः । पूर्वनैदाघः । अशादिति किं ? पूर्वास्वतीतासु वर्षासु भवः पौर्व वर्षः । आपरवर्षः ।

सुसर्वार्द्धाद्राष्ट्रस्य ॥ १८ ॥ एभ्यः परस्य राष्ट्रवाचकस्यैज्भवति इति परतः । सुपचालेषु जातः सुपाचालकः । सर्वपाचालकः । अर्द्धपा चालकः । सुमागधकः । सर्वमागधकः । अर्द्धमागधकः ।

दिशोऽमद्रस्य ॥ १९ ॥ दिक्शब्दात्परस्य राष्ट्रस्य मद्रवर्जितस्य ऐज्भवति । पूर्वेषु पचालेषु जात पूर्वपाचालकः । अपरपाचालकः दक्षिण पाचालकः । उत्तरपाचालकः । अमद्रस्येति किं ? पौर्वमद्र । आपरमद्रः ।

प्राग्ग्रामाणां ॥ २० ॥ दिशः परेषां प्राग्दे- शेग्रामाणामैज्भवति इति परतः । पूर्वेषुकाम । शम्यां जातः पूर्वेषुकामशमः । अपरकामशाम । पूर्वकार्ष्णमृत्तिकः । अपरकार्ष्णमृत्तिकः । प्रागिति किम् ? पौर्वदेवदत्तः ।

*स्यधिकाभ्यां वर्षस्याभाविनि ॥ २१ ॥ आभ्यां वर्षस्यैज्भवति—अभाविन्यर्थे इति परे । द्वाभ्यां वर्षाभ्यां निर्वृतो भृतोऽधीष्टो वा द्विवार्षिकः । त्रिवार्षिकः । अधिकेन वर्षेण निर्वृत्तः-अधिक- वार्षिकः । अभाविनीति किं ? द्वे वर्षे भावि द्वैवार्षिक । त्रैवार्षिकं धान्यं ।

*मानसंवत्सरस्याशाणकुलिजस्याखौ ॥२२॥ स्याधिकाभ्यां परस्य शाणकुलिजवर्जितस्य मानस्य संवत्सरस्य चैज्भवति अखौ । द्वौ कुडवौ प्रयोजनमस्य द्विकौडविकः । त्रिभिः सुवर्णैः क्रीत त्रिसौवर्णिकः । द्वाभ्यां षष्टिभ्यां भृत द्विषा- ष्टिकः । अधिकषाष्टिकः । द्विनवत्या क्रीत द्विनावतिकः । द्वाभ्यां संवत्सराभ्यां भृत द्विसां- वत्सरिकः । अधिकसांवत्सरिकः । अशाणकु-

ल्गिन्येति किं ? त्रिभिः शाणैः क्रीतं त्रैशाणम् । द्वैकुल्ये प्रयोजनमस्य द्वैकुलिजिकम् । अस्याविति किम् ? पञ्चलोहित्य परिमाणमस्य पाञ्चलोहितिकम् ।

हृत्सिन्धुभगे द्वयोः ॥ २३ ॥ एषु परतः द्वयोः पदयोः ऐप् स्यात् । सुहृदयस्येदं सौहार्दम् । परमसिन्धुषु भवः पारमसैन्धवः । सौभाग्यः । दौर्भाग्यः ।

अनुशतिकादीनाम् ॥ २४ ॥ एषां द्वयोः पदयोः आदेरच ऐप्स्यात् । अनुशतिकस्यापत्यम् आनुशातिकिः । आनुहौडिः । इहलोके भवः—ऐहलौकिकः । पारलौकिकः ।

+ राजपौरुष्य ॥ २५ ॥ राजपुरुषशब्दात् ष्यणि द्वयोरैब्निपात्यते । राजपौरुष्यम् । ष्यणीति किं ? राजपुरुषस्यापत्यं राजपुरुषायणिः ।

*देवतानां डानि ॥२६॥ देवतार्थानां डान्विषये द्वयोरैप्स्यात् । आग्निमारुतः । आग्निसौमः । डानीति किम् ? स्कन्दविशाखः ।

नेन्द्रवरुणस्यात् ॥ २७ ॥ अवर्णान्तादिन्द्रवरुणयोरैन्न स्यात् । आग्नेन्द्रः । ऐन्द्रावरुणः । आदिति किम् ? ऐन्द्राग्नः । आग्निवारुणः ।

प्राग्नगरे ॥२८॥ प्राचां देशे नगरे यौ द्वयोः पदयोरैब्भवति । विराटनगरे भव वैराटनागरः । सौह्मनागरः । पाण्डुनागरः । प्रागिति किं ? माल्यनगरः ।

जङ्गलधेनुवलजे ॥ २९ ॥ जङ्गलादिषु धुषु पूर्वपदस्यैब्भवति । कुरुजङ्गले भवः कौरुजङ्गलः । कौरुजाङ्गलः । वैश्वधेनवः । सौवर्णवलजः ।

वा धोः ॥ ३० ॥ जङ्गलादेर्धोर्वा ऐब्भवति । कौरुजङ्गलः । कौरुजाङ्गलः । वैश्वधेनव । वैश्वधैनवः । सौवर्णवालजः । सौवर्णवलजः ।

परिमाणस्यानतोऽर्द्धाद्वादेः ॥३१॥ अर्द्धात्परस्य परिमाणस्यानकारस्यैब्भवति आदेः पदस्य तु वा । अर्द्धद्रोणं पचति अर्द्धद्रौणिकः आर्द्धद्रौणिकः । अर्द्धमौष्टिकः । आर्द्धमौष्टिकः । अनत इति किम् ? अर्द्धप्रास्थिकः । आर्द्धप्रस्थिकः ।

प्राग्वाहणस्य ढे ॥ ३२ ॥ प्रशब्दात् वाहणस्य ढे परे ऐब्भवति आदेस्तु वा । प्रवाहणस्यापत्यं प्रवाहणेयः । प्रावाहणेयः ।

ढस्य ॥ ३३ ॥ ढयान्तस्य प्राग्वाहणस्य ऐप् भवत्यादेस्तु वा । प्रवाहणेयस्यापत्यं प्रवाहणेयिः । प्रावाहणेयिः ।

*नञः क्षेत्रज्ञकुशलचपलनिपुणेश्वरशुचेः ॥३४॥ नञः परेषां क्षेत्रज्ञादीनामचामादेरच ऐब् भवत्यादेस्तु वा ञ्णिति परतः । आक्षेत्रज्ञ्यम् । अक्षेत्रज्ञ्यम् । अकुशलस्येदम् अकौशलम् । आकौशलम् । आचापलम् । अचापलम् । अनैपुणम् । आनैपुणम् । अनैश्वर्यम् । आनैश्वर्यम् । अशौचम् । आशौचम् । सानात् स्यो लवौ—आयथातथ्यम् । आयथापुर्यम् । त्यानान्त्यविधौ अयाथातथ्यम् । अयाथापुर्यमित्यपि सिद्धम् ।

हन्तोऽणखर्यो ॥ ३५ ॥ हन्तेस्तो भवति णिति ञ्णिति परतः । घातयति । घातकः । सर्वघाती । घात घात घातौ वर्तते । अणखर्योरिति किम् ? जघान । अघानि ।

आतो युग् ञौ ॥३६॥ आतः परस्य णबः औत्वं स्यात् । पपौ । ययौ । तस्थौ ।

कृद्ञ्ये युक् ॥३७॥ आतो युगागमो भवति कृति ञ्णिति ञौ च परे । दायकः । धायकः । अदायि । अधायि । कृञ्ञाविति किं ? ग्ला देवता अस्य ग्लः ।

*न मोऽकम्यमिचमिजनवधः ॥३८॥ मान्तस्य कमादिवर्जितस्य कृति ञ्णिति ञौ च ऐप स्यात् । शमः । शमकः । अशमि । दमः । दमकः । अदमि । तमः । तमकः । अतमि । शमी । दमी । तमी । अकमादेरिति किं ? कामः । कामकः । वामः । वामकः । यामः । यामकः । रामः । रामकः ।

नाम । नामकः । गामुक । गामकः । आचाम । आचामकः ।

जन्य यो ॥ ३९ ॥ जनिवध्योः कृन्यो ऐन्न स्यात् । जनक । जनः अजनि । वधः । वधक । अवधि ।

+यम्युपोद्रम्यमः ॥ ४० ॥ उपोद्भ्यां रमि यमो घनि ऐन्न भवति । उपरमः । उद्यमः ।

विश्रमा वा ॥ ४१ ॥ विपूर्वस्य श्रमेर्घनि वैन्न स्यात् । विश्रामः । विश्रमः ।

ह्रीव्लीरीक्नूर्यर्तिक्ष्माय्याता पुग् णौ ॥ ४२ ॥ ह्र्यादीनामाकारान्तानां च णौ परे पुग्भवत्यैप् च । ह्रेपयति । व्लेपयति । रेपयति । क्नापयति । अर्पयति । क्ष्मापयति । दापयति । स्थापयति । धापयति । मापयति ।

शाछासाह्वाव्यावेपा युक् ॥ ४३ ॥ शादीनां णौ युग् भवति । निशाययति । अवच्छाययति । अवसाययति । आह्वाययति । संव्याययति । वाययति । पाययति ।

*धूञ्प्रीञोर्नुक् ॥ ४४ ॥ धूञ्प्रीञोर्णौ नुग् भवति । विधूनयति । प्रीणयति ।

*कथादेः ॥ ४५ ॥ कथादीनां णावगागमो भवति । कथयति । वरयति । गणयति । रहयति । गदयति । कल्पयति । महयति । स्पृहयति । गृहयते । पतयति । गवेषयति ।

वो विधूनने जुक् ॥ ४६ ॥ वातेर्विधूननेऽर्थे णौ जुग् भवति । पक्षेणोपवाजयति । विधूनन इति किं ? केशानावापयति ।

पातेर्लुक् ॥ ४७ ॥ पातेर्णौ लुग् भवति । पालयति शीलमाचार्य्यः । पालयति धर्मं जैनः ।

*लो वा स्नेहद्रवे ॥ ४८ ॥ ला इत्येतस्य स्नेहद्रवेऽर्थे णौ जुग्वा भवति । विलापयति । विलालयति घृतं । स्नेहद्रव इति किं ? अयो विलापयति ॥

ल्यो नुक् ॥ ४९ ॥ ली इत्येतस्य णौ स्नेहद्रवे नुग्वा स्यात् । विलीनयति । विलाययति आज्यं ।

रुहः पः ॥ ५० ॥ रुहेर्णौ वा पो भवति । आरोपयति, आरोहयति स्वर्गं जिनधर्मः ।

स्फायो वः ॥ ५१ ॥ स्फायो णौ परे वादेशो भवति । स्फावयति । स्फावयत । स्फावयति ।

शदोऽगतौ तः ॥ ५२ ॥ शदेन्तो भवति अगत्यर्थे णौ परे । पुष्पाणि शातयति । फलानि शातयति । अगताविति किं ? गाः शादयति यष्ट्या ।

त्यस्थेऽचिरकयापीदऽतोऽसुपोऽयदादे ॥ ५३ ॥ त्यस्थे चिद्विहिते ककारे आप्परे पूर्वस्य यदादिवर्जितस्य इकारादेशो भवति न चेत्स आप्सुप्परो विहित । जटिका । मुंडिका । जटिलिका । त्य इति किं ? शका । तका । स्थ इति किंपाचिका । कारिका । अत्रापि यथा स्यात् । अचिदिति किम्? जीवका । नन्दका । अनुकम्पिता । देवका । कीति किं ? नदना । रमणा । आपीति किं ? पाचकः । अत इति किम्? गावा । नौका । असुप इति किं? बहुपरिव्राजका मथुरा । अयदादेरिति किं? यका । सका । क्षिपका ।

*त्ययोः ॥ ५४ ॥ त्यणत्यकृत्यातस्य आपीत्वं स्यात् । दाक्षिणात्यिका । इहत्यिका ।

×नरिकामामिका ॥ ५५ ॥ नरकमामकयोरित्वं निपात्यते । नरान् कायति नरिका । मम इयं मामिका ।

+ तारकाष्टकवर्णका ज्योतिःपित्रादितन्त्रे ॥ ५६ ॥ तारकाद्यो निपात्यते ज्योतिरादिष्वर्थेषु । तारका नक्षत्रं । अष्टका पित्रादिक्रिया विशेषः । वर्णका वस्त्रविशेषः । तारिका । अन्या परिमाणमस्या अष्टिका । वर्णिकाऽन्यत्र ।

वाऽऽतोऽधोर्यकात् ॥ ५७ ॥ अधोर्यकारककाराभ्या परस्यातःस्थाने इतो योऽकारस्तस्येद्भवति वा । इभमर्हति इभ्या । कुत्सिता इभ्या इभ्यिका । इभ्यका । अर्यिका । अर्य्यका । चटकिका । चटकका । मूषिकिका । मूषिकका । आत इति किं ? साकाश्ये भवा साकाश्यिका । अधोरिति किं? सुनयिका । सुपाकिका ।

*द्वयेषसूतपुत्रवृंदारकस्य ॥ ५८ ॥ एषामत इद्वा स्यात् । द्विके । द्वके । एषिका । एषका । सूतिका । सूतका । पुत्रिका । पुत्रका । वृंदारिका । वृंदारका ।

+वार्त्तिका वा ॥५९॥ वावर्थे इद्वा निपात्यते । वर्त्तिका, वर्त्तका पक्षी । वर्तिकान्यत्र ।

*भस्त्राजाज्ञास्वानां ॥ ६० ॥ एषामतो वा इत्व स्यात् । बहवः भस्त्रा यस्याः बहुभस्त्रिका, बहुभस्त्रका । आजिका, अजका । ज्ञिका, ज्ञका । स्विका, स्वका ।

आषानुक्तपुस्कात् ॥ ६१॥ अनुक्तपुस्कात्परस्यात आत्वमित्त्व च वा स्यात् । खट्वाका, खट्विका, खट्वका । वीणाका, वीणिका, वीणका ।

इक ठ ॥६२॥ ठस्य इक् इत्ययमादेशो भवति । आक्षिकः । आमृषिकः । पारषिकः ।

* दोसिसुसुगशश्वदकस्मात्तः कः ॥ ६३ ॥ दोस्शब्दात् इसुसुगतात् शश्वदकस्माद्वर्जितात्तकारात्ताच्च ठस्य को भवति । दोर्भ्यां तरति दौष्कः । सर्पिः पण्यमस्य सार्पिष्कः । धानुष्कः । साक्तुकः । मातृकः । औदश्वित्कः । अशश्वदकस्मादिति किं? शश्वद्भव शाश्वतिकः । आकस्मिकः ।

चजोः कुर्घिण्ये तेऽनिटः ॥ ६४ ॥ ते अनिटो घोधकारजकारयोः कुत्व स्यात् घिति ण्ये च परतः । पाकः । सेकः । त्यागः । योगः । पाक्यं । योग्य । ते अनिट इति किं ? सङ्कोचः । कूजः । खजः । परिव्राजः । शोच्य ।

+निदाघावदाघार्घवाग्य खौ ॥ ६५ ॥ निदाघादयो निपात्यते खौ । निदाघः । अवदाघः । अर्घ । वाग्य । खाविति किं ? निदाहः । अवदाहः । अर्ह । वाच्य ।

न्यङ्क्वादीनां ॥ ६६ ॥ एषा कुत्व निपात्यते । न्यचतीति न्यङ्कुः । मेघः । पिंडपाकः । शोकः । तक्र । वक्र । आकृतिगणोऽय ॥

हो घ्नो ञ्णितित्रि ॥६७॥ हन्तेर्हकारस्य कुर्भवति ञ्णिति नशोर च परे । अघानि । घातयति । साधुघाती । घात घात । घ्नति । घ्नतु । अघ्नन् । ञ्णिन्नीति किं ? हतः । हतवान् ।

चात् ॥ ६८ ॥ चात्परस्य हन्तेर्हस्य कुर्भवति । जघान । जघन्यते । जिघांसति ।

हेरङ्चि ॥ ६९ ॥ हिनोतेश्चात्परस्य कुर्भवत्यङ्चि परतः । जिघाय । जेघीयते । जिघीषति । अङ्चीति किं ? प्राजीहयत् ॥

सँल्लिटोर्जे ॥ ७० ॥ चात्परस्य जेः कुर्भवति सनि लिटि च परतः । जिगीषति । जिगाय ।

वा चेः ॥ ७१ ॥ चात्परस्य चिनोतेर्वा कुर्भवति सँल्लिटो परतः । चिकीषति । चिचीषति । चिकाय । चिचाय यम ।

न वञ्चेर्गतौ ॥७२॥ वञ्चेर्गत्यर्थे कुर्न स्यात् । वञ्चि । वञ्च वञ्चति वाणिजाः । गताविति किं ? वक्र काष्ठ ।

*याजादयो यज्ञाङ्गे ॥ ७३ ॥ एते निपात्यते यज्ञाङ्गे । याज । प्रयाजः । अनुयाजः । यज्ञाङ्गे इत्येव । याग ।

ण्य आवश्यके ॥ ७४ ॥ आवश्यकेऽर्थे ण्ये परत कुर्न स्यात् । अवश्यमेच्य । अवश्यपाच्य । आवश्यक इति किं ? सेक्य ।

यज्याज्यवचां ॥ ७५ ॥ एषां ण्ये परे कुर्न

स्यात् । याज्यं । त्याज्यं । प्रवाच्यं ।

*भुजोऽदौ ॥७६॥ भुजेरद्यर्थे ण्ये कुर्न भवति । भोज्याः अपूपाः । अदाविति किं ? भोग्यं वस्त्रं ।

*नियोयुजः शकि ॥ ७७ ॥ आभ्यां युजेः शक्यर्थे कुर्न स्यात् ण्ये परतः। नियोज्यः। प्रयोज्यः। शकीति किं ? नियोग्यः । प्रयोग्यः ।

क्सस्याचि खं ॥ ७८ ॥ क्सस्य खं भवति अचि परे । अधुक्षि । अधुक्षाथां । अधुक्षातां । अधिक्षि । अधिक्षाथां । अधिक्षातां । अचीति किं ? अधुक्षत् ।

वोऽदुहदिहलिहगुहो दे दंत्ये ॥ ७९ ॥ दुहादिभ्यः क्सस्य वा उब्भवति दे दंत्यादौ परतः । अदुग्ध । अदुग्धाः । अधुक्षत । अधुक्षथाः । अदिग्ध । अदिग्धाः । अधिक्षत । अधिक्षथाः । अलीढ । अलीढाः । अलिक्षत । अलिक्षथाः । न्यगूढाः । न्यघुक्षत । न्यघुक्षथाः । द इति किं ? अधिक्षत् । दंत्य इति किं? अधुक्षामहि ।

ओतः श्ये ॥ ८० ॥ ओकारस्योप् भवति श्ये परतः। निश्यति । स्यति । घति । अपच्छ्यति ।

*शमां दीः ॥ ८१ ॥ शमादीनां दीर्भवति श्ये परे । शाम्यति । दाम्यति । ताम्यति । श्राम्यति । क्लाम्यति । माद्यति ।

ष्ठिवुक्लम्वाचमां शि ॥ ८२ ॥ एषां दीर्भवति शिति परतः । निष्ठीवति । निष्ठीवन् । निष्ठीवेत् । न्यष्ठीवत् । क्लामति । क्लामन् । क्लामेत । अक्लामत् । आचामति । आचामन् । आचामेत् । आचामतु ।

क्रमो मे ॥ ८३ ॥ क्रमः शिति मनिमित्ते दीर्भवति । क्रामति । क्रामन् । क्रामेत् । अक्रामत् । म इति किं ? आक्रमते सूर्य्यः ॥

गमिषुयमां छः ॥८४॥ एषां शिति परे छो भवति। गच्छति । गच्छन् । संगच्छते। अगच्छत् । इच्छति । यच्छति ।

पाघ्राध्मास्थाम्नादाण्दृश्यर्तिशदसदां पिबजिघ्रधमतिष्ठमनयच्छपश्यर्च्छशीयसीदाः ॥ ८५ ॥ पादीनां पिबादयो भवंति शिति परतः । पिबति । पिबन् । पिबेत् । अपिबत् । जिघ्रति । जिघ्रतः । धमति । धमतः । तिष्ठति । तिष्ठतः। आमनति। आमनतः। प्रयच्छति। प्रयच्छतः। पश्यति । पश्यतः । ऋच्छति । ऋच्छतः । शीयते । शीयेते । सीदति । सीदतः । सीदंति ।

*सर्तेर्धौ शैघ्र्ये ॥ ८६ ॥ सर्तेः शिति परतः धौ स्यात् शैघ्र्येऽर्थे । धावति । धावतः। धावंति । धावतु । धावन् । शैघ्र्य इति । किं ? सरति ।

ज्ञाजनोर्जा ॥ ८७ ॥ एतयोः शिति जा इत्ययमादेशो भवति । जानाति । जानीते । जायते । जायतां ।

प्वः प्रः ॥८८॥ पू इत्येवमादीनां शिति प्रो भवति । पुनाति । स्तृणाति । लिनाति ।

मिदेरेप् ॥ ८९ ॥ मिदः शिति एप् भवति । मेद्यति । मेद्यतः । मेद्यन् ।

जुसि ॥९०॥ इगंतस्य जुस्येप् भवति । अजुहवुः । अबिभयुः । अबिभरुः ।

गाऽगयोः ॥९१॥ गे अगे च परे गोरेब् भवति जयति । जेता । सुनोति । सोता । धरति । धर्ता ।

जागुरविचिण्णड्ङिति ॥ ९२ ॥ जागर्तेरेब्भवति अविचिण्णड्ङिति परतः। जागरयति । जागरकः । साधु जागरी । जागरं जागरं। जागरो वर्त्तते। जागर्य्यते । अविचिण्णड्ङितीति किं ? जागृविः । अजागरि । जजागार । जागृतः । जागृथः ।

घ्युङः ॥९३॥ घेरुङः एप् भवति गागयोःपरतः । द्योतति । वर्षति । छेत्ता । भेत्ता । धीति किं ? जीवति ।

नेटः ॥ ९४ ॥ इट एप्न भवति गागयोः

मो वा स्यात् किङ्योः परतः। हे देवत। हे देवते। देवते भक्तिः। देवतायां भक्तिः।

प्रस्यैप् कौ॥११५॥ प्रांतस्यैप् भवति कौ परतः। हे मुने। हे साधो।

जसि॥११६॥ प्रांतस्यैप् भवति जसि परतः। मुनयः। साधवः। धेनवः। बुद्धयः।

ऋतो ङिधे॥११७॥ ऋकारांतस्यैप् भवति ङौ धे च परतः। पितरि। मातरि। पितरौ। पितरः। मातरौ। मातरः।

सोर्ङि॥११८॥ स्वंतस्य गोरेप् भवति ङिति सुपि परतः। मुनये। साधवे। बुद्धये। धेनवे। साधोः। मुनेः। बुद्धेः। धेनोः। ङीति किं? साध्वोः।

अण्मोः॥११९॥ न्यंतात्परस्य ङितोऽड् भवति। नद्यै। नद्याः। वध्वै। वध्वाः।

याडापः॥१२०॥ आपः परस्य ङितः सुपः याट् स्यात्। विद्यायै। विद्यायाः। विद्यायां। बहुराजायै। बहुराजायाः। बहुराजायां।

स्नेः स्याट् प्रश्च॥१२१॥ स्नेराबंतात्परस्य ङितः स्याट् भवति प्रश्चापः। सर्व्वस्याः। सर्व्वस्यै तस्यै। तस्याः। कस्याः। कस्यां।

*न्याम्मोर्ङेराम्॥ १२२॥ नी आप् मु इत्येतेभ्यः ङेराम् भवति। नियां। ग्रामण्यां। विद्यायां। नद्यां। वध्वां।

इदुतः॥ १२३॥ इदुद्भ्यां मुभ्यां ङेराम् भवति। बुद्धयां। धेन्वां।

*औः॥ १२४॥ ताभ्यां ङेरौ भवति। सख्यौ। पत्यौ।

*सोर्डौ॥१२५॥ सुसंज्ञाभ्यां ङेर्डौ स्यात्। मुनौ। साधौ। बुद्धौ। धेनौ।

टो नाऽस्त्रियां॥ १२६॥ सोः परस्य भेकस्य ना भवत्यस्त्रियां। मुनिना। साधुना। अस्त्रियामिति किं? बुद्ध्या। धेन्वा। सोरिति किं? सख्या। पत्या।

सूत्रेऽस्मिन् सुब्विधिरिष्टः॥१२७॥ सूत्रेऽस्मिन् जैनेन्द्रे सुपो विधिः सुपि च विधिरिष्टो भवति। मिडैकार्थे वाः। स्त्रीगोर्नीचः—नुममाव इत्यादि।

णौ कच्युङः प्रोऽशास्वक्लृदितः॥१२८॥ कच्परे णौ परतः उङः प्रो भवति शास्वादीन्विहाय। अपीपठत्। अलीलवत्। अचीकरत्। कचीति किं? कारयति। उङ इति किं? अचकांक्षत्। अशास्वक्लृदित इति किं? अशशासत्। मालामाख्यत्—अममालत्। अरराशत्। अडुढौकत्। अतुत्रौकत्।

* भ्राजभासभाषदीपजीवमीलपीडकणरण् श्रणचणलुटां वा॥ १२९॥ एषां कच्परे णौ उङः प्रो वा भवति। अबिभ्रजत्, अबभ्राजत्। अबीभसत्, अबभासत्। अबीभषत्, अबभाषत्। अदीदिपत्, अदिदीपत्। अजीजिवत्, अजिजीवत्। अमीमिलत्, अमिमीलत्। अपीपिडत्, अपिपीडत्। अचीकणत्, अचकाणत्। अरीरणत्, अरराणत्। अशिश्रणत्, अशश्राणत्। अचीचणत्, अचचाणत्। अलूलुटत्, अलुलोटत्।

उर्ऋत्॥१३०॥ कच्परे णौ ऋवर्णस्योङः ऋद्वा स्यात्। इररारामरामपवादः। अचीकृतत्। अचकीर्त्तत्। अवीवृतत्। अववर्त्तत्। अमीमृजत्। अममार्जत्।

*जिघ्रतेरिः॥१३१॥ घ्रा इत्यस्योङः कच्परे णौ इर्वा स्यात्। अजिघ्रिपत्। अजिघ्रपत्।

*तिष्ठतेः॥१३२॥ अस्योङः कच्परे णौ इर्भवति। अतिष्ठिपत्। अतिष्ठिपतां। अतिष्ठिपत्।

खं पिबश्चस्येत्॥१३३॥ पिबतेः कच्परे णौ उङः खं स्यात् चस्य च इत्वं। अपीप्यत्। अपीप्यतां। अपीप्यन्।

दोर्दिग लिटि ॥१३४॥ मचन्य ढेढः दिगि स्यात् लिटि परतः । अवाडिग्ये । अवाडिग्याते । अवदिग्यिरे ।

*स्फाड्यृदर्त्तेरप् ॥१३५॥ स्फाटेः ऋतोऽर्त्तेश्च एप्यात् लिटि । मम्मरतु । सम्मरुः । दध्वरतुः । दध्वरु । आरतुः । आरुः । स्फादीति किं चक्रतुः । चक्रु । ऋदर्त्तेरिति किं चिक्षियतुः । चिक्षिपुः ।

ऋतृत ॥१३६॥ ऋच्छते ऋकारान्ताना च लिन्येप् भवति । आनर्छ । आनर्छतुः । चकरतु । चकरुः । जगरतु । जगरः ।

शृदृपां मो वा ॥१३७॥ एषा लिटि परतः मो वा भवति । शश्रतुः, शशरतुः । दद्रतुः, ददरतुः । पप्रतुः, पपरतुः ।

केऽण ॥१३८॥ अण के परे मो भवति । मोमपक्र । तन्त्रिका । नन्त्रिका । अण इति किं नौका ।

न कपि ॥१३९॥ कप्यण मो न स्यात् । बहुश्रीरपाक । बहुमारीक । बहुवधूक । बहुवामोरूक ।

वाऽऽप ॥१४०॥ आप मो भवति कपि परे वा । बहुखट्वक । बहुखट्वाक ।

*नगोऽदीम् ॥ १४१ ॥ नगेरिम् भवति अडि परे । अनेशत्, अनशत् ।

इण्यस्पद्वचोऽपुरपुमुम् ॥१४२॥ एषां अकारादयो भवन्त्याडि परे । अगात् । आस्थन् । अपप्तत् । अवोचत् । अवोचन् । अवोचन् ।

दशुरेप् ॥१४३॥ दशे ऋवर्णान्तानां चाड्येप् स्यात् । अदर्शन् । आरत् । असरत् ।

शीङो गे ॥१४४॥ शीङ एप् भवति गे परे । शेते । शयाते । शेरते । ग इति किं शशीति ।

यि रिड्लयङ् ॥१४५॥ यकारादौ क्ङिति परे शीङ अयङ् स्यात् । शय्यते । शाशय्यते । यीति किं शिश्ये । क्ङितीति किं शेय ।

गेरुह् ध ॥१४६॥ गे परस्य ऊह् भो भवति क्ङिति । समुद्यते । अभ्युह्यते । समुह्यात् । अभ्युह्यात् । गेरिति किं ऊह्यते ।

लिङ्यंते ॥१४७॥ गे परस्य एतेर्लिङि भो भवति यि क्ङिति । उदियात् । समियात् । अधियात् । लिङीति किं समीयते ।

*दीर्घच्व्यकृत् ॥१४८॥ च्वौ अकृत्यकारे अयकारे च परे दीर्घो भवति मो । शुचीकरोति । पटूस्यात् । अमृशो भृशो भवति भृशायते । चीयते । स्तूयते । चीयात् । स्तूयात् । च्व्यकृदिति किं शुच । शुचं । स्तुयात् ।

रीङ् ऋत ॥१४९॥ ऋकारान्तस्य रीङ् भवति च्व्यकृत् परतः । पित्रीभवति । मात्रीभवति । पित्रीयति । मात्रीयति । पित्रीयते । जेह्रीयते । चेक्रीयते ।

रिङ् यशिङ्गे ॥१५०॥ ऋकारान्तस्य रिङ् भवति यकि लिङि गे च परत । क्रियते । क्रियात् । आद्रियते । आध्रियते ।

स्फायृदर्त्तेरमृगेप् ॥१५१॥ स्फादे मृगर्ति, तस्य ऋतोऽर्तेश्चएप् भवति यक्लिङी परत । ध्वर्यते । स्मर्यते । अर्यते । ध्वर्यात् । स्मर्यात् । अर्यात् । अमृगेरिति किं सीस्र्यात् ।

यङि ॥१५२॥ स्फादे ऋतोऽर्तेश्च यङि एप् भवति । सास्मर्यते । दाध्वर्यते । सास्वर्यते । अरार्यते ।

+घ्नो घ्नी हिंसायां ॥१५३॥ हन्तेर्घ्नी भवति हिंसार्थे यङि परे जेघ्नीयते शत्रून् । जङ्घन्यते न्यत्र ।

ई घ्राध्मो ॥१५४॥ घ्रा ध्मा इत्येतयोरी भवति यङि परत । जेघ्रीयते । देध्मीयते ।

*अस्याऽस्थव्यौ ॥१५५॥ अवर्णान्तस्य सिद्धाद्विन्यस्य ई भवति च्वौ परे । शुक्लीभवति । शुक्लीकरोति । शुक्लीस्यात् । मालीस्यात् । अवर्णेति किं

दोषाभूतमहः ।

क्याचि ॥१५६॥ अवर्णांतस्य ईर्भवति क्याचि परतः। पुत्रीयति । मालीयति ।

क्षुत्तृड्गर्द्धेऽशनायोदन्यधनायं॥१५७॥एष्व-र्थेषु अशनादयः क्यजंता निपात्यंते। अशनायति। उदन्यति । धनायति।अशनीयति । उदकीयति । धनायति अन्यत्र ।

दोसोमास्थां क्तीत्॥१५८॥ एषां तका-रादौ क्तिति परे इत्वं स्यात् । निर्दितः। निर्दित-वान् । दित्वा । दितिः । अवासितः । अवसित-वान् । सित्वा । सितिः। मितः।मितवान्। मित्वा। मितिः । स्थितः।स्थितवान् । स्थित्वा । स्थितिः। क्तीति किं ? दीयते । दाता ।

*शो व्रते ॥ १५९ ॥ श्यतेः क्तिति व्रतविषये इद् भवति । संशितं व्रतं । संशितो व्रती । व्रत इति किं ? निशातः ।

*छश्च वा ॥ १६० ॥ छ्यतेः श्यतेश्च इर्वा स्यात् क्तिति परे । अपच्छितः । अपच्छितवान्। अपच्छातः। अपच्छातवान् । निशितः। निशित-वान् । निशातः । निशातवान् ।

धाञो हिः ॥१६१॥ धाञः हिर्भवति क्तिति परे । हितः । हितवान् । हित्वा । हितिः ।

हाकःक्त्वि॥१६२॥हाकःहिर्भवति क्त्वात्ये परे । हित्वा राज्यं गतः । क्त्वीति किं?हीनः। हीनवान् ।

दो दद्घोः ॥१६३॥ दा इत्येतस्य घुसंज्ञकस्य दद्भवति क्तिति परे । दत्तः । दत्तवान् । दत्त्वा। दत्तिः । घोरिति किं?दातं बर्हिः। अवदातं मुखं।

मरुद्देस्तोऽचः ॥१६४॥ मरुतः गेरचांजतात् परस्य दो घोस्तकारादेशो भवति क्तिति परे।मरुत्तः एनं देयासुः-मरुत्तः । प्रत्तः। प्रत्तवान्।परिदानेन निरुत्तं परीत्तिमं । मरुद्गेरिति किं?दाधिदत्तं।अचः इति किं ? संदत्तः ।

*प्रादाञो वाऽरंभे क्ते॥१६५॥प्रात्परस्य दाञः वा तो भवत्यारंभे क्ते त्ये परे । प्रत्तः । प्रदत्तः । प्रादिति किं ? परीत्तः ।

*निविस्वन्ववात्॥१६६॥ एभ्यो दाञः-आरं-भे क्ते तो वा स्यात् । नीत्तं । निदत्तं । वीत्तं । विदत्तं । सूत्तः । सुदत्तः।अनूत्तं । अनुदत्तं । अवत्तं । अवदत्तं ।

भ्यपः ॥१६७॥ भकारादौ परे अपस्तो भवति। अद्भिः। अद्भ्यः । भीति किं ? अप्सु ।

स्येऽसः ॥१६८॥ सकारादौ अगे गोरचः परस्य सकारस्य तादेशो भवति । वत्स्यति। अव-त्स्यत् । विवत्सति । सीति किं?वासिष्यते । अग इति किं ? आस्से । वस्से ।

तासस्त्योः खं॥१६९॥तासोऽस्तेश्च सका-रस्य सकारादौ परतःखं स्यात् ।कर्तासि।कर्तासे। असि । व्यतिसे ।

रि ॥१७०॥ तयोः सकारस्य खं भवति रे-फादौ । कर्तारौ । कर्तारः। रेफादौ अस्तेः सकारो नास्ति भूभावस्य विद्यमानत्वात् ।

एति हः ॥१७१॥ तयोः सकारस्य हो भवति एकारे परतः। कर्ताहे । व्यतिहे ।

*दीधीवेव्योरिये॥१७२॥ दीधी वेवी इत्येत-योरिवर्णयकारयोः परतः खं स्यात् । दीधीङ् दी प्तिदेवनयोः । आदीधिता । आदीधीत । आदी-धयति । साधुदीधी । दीधितिः। यकारे—आदी ध्याते । आदीध्य गतः। आदीध्यं। वेवीङ् वेतना-तुल्ये । आवेविता । आवेवीत । आवेवयति । साधुवेवी । वेवितिः । आवेव्यते । आवेव्य गतः आवेव्यं।इवर्णयकारे इति किं?आदीध्यनं।आवेव्यनं।

*योऽचि॥१७३॥ तयोर्यकारादेशो भवत्यचि परतः। आदीध्य। आदीध्यावहै । आदीध्यामहै ।

आदीध्याथा । आदीध्याता । आदीध्यक । वेव्यै । वेव्यावहे । वेव्यामहे । वेव्याथा । वेव्याता । वेव्यक ।

स्सानि मीमाघुरभलभशकपतपदोऽच इस्॥१७४ एषामच इस् भवति सनि सकारादौ परत । मित्सति शत । प्रमित्सति शत्रु ।मित्सते । प्रमित्सते । निमित्सते । अपमित्सते । दित्सति । दित्सते । धित्सति । आरिप्सते । आलिप्सते । शिक्षति । पित्सति । पित्सते । सकारादाविति किं ? पिपतिषति । सनीति किं ? दास्यति ।

राधो वधे ॥१७५॥ राधेर्वधार्थेऽच इस् भवति सनि परे । प्रातिरित्सति चौरं । वध इति किं ? आरिरात्सति जिन ।

आपज्ञप्यृधामीत् ॥१७६॥ एषामचः ईत्व स्यात् सनि परे । ईप्सति । ज्ञीप्सति । ईर्त्सति ।

दम इच्च ॥१७७॥ दम्भेरच इत्वमीत्व च स्यात् सनि परे । धिप्सति । धीप्सति ।

*वौन्मुचो धे ॥१७८॥ भिसङ्कस्य मुचेरच ओत्व वा स्यात् सकारादौ सनि परत । मोक्षते, मुमुक्षते वत्स स्वयमेव । धेरिति किं ? मुमुक्षति कर्माणि मुनि ।

*चस्योप् ॥१७९॥ चस्योप् भवति सनि परे । मित्सतीत्यादि ।

हलोऽनादे ॥ १८० ॥ अनादेर्हलश्चस्योप् भवति । जघ्नौ । पपाट । आट । आटतुः । तुत्रौकिषति ।

शर खपि ॥१८१॥ शरश्चस्योप् भवति खपि परत । चुश्च्योतिषति । पिस्पर्दिषते । खपीति किं ? सस्नौ ।

प्र ॥१८२॥ चस्य प्रादेशो भवति । पपौ । निन्ये । दुढौकिषते ।

उर ॥१८३॥ चस्य ऋवर्णस्य अत्व स्यात् । चक्रे । वव्रुते ।

झपो जश् ॥१८४॥ झपश्चस्य जश् भवति । बभार । दधौ ।

खरश्चर् ॥१८५॥ खरश्चस्य चर् भवति। पफणतु । पफणुः । तिष्ठासति ।

*ष्ठिवष्टो वा ॥१८६॥ ष्ठिवश्चस्य खरष्टो वा भवति । टिष्ठेव । तिष्ठेव ।

कुहोश्चुः ॥ १८७ ॥ चस्य कवर्गहकारयो चुत्व भवति। चस्तुः। जगाम । जुहुवे । जहास ।

*यङ्यश्चते ॥१८८॥ यङि चस्याऽश्चते कुहोश्चुर्भवति । चोकूयते । चाखायते । जगम्यते। जेह्रीयते । अश्चतेरिति किं ? कोकूयते ।

*स्वपेर्णौ ॥१८९॥ स्वपेश्चस्य उर्भवति णौ परे । सुष्वापयिषति । सुष्वापयिषत ।

*द्युतेरि ॥१९०॥ द्युतेश्चस्य इर्भवति । दिद्युते । देद्युत्यते ।

व्यथो लिटि ॥१९१॥ व्यथेश्चस्य लिटि परे इर्भवति । विव्यथे । विव्यथाते । विव्यथिरे ।

किती णो दीं ॥१९२॥ इणश्चस्य दीर्भवति किति लिटि परत । ईयतु । ईयु । कितीति किं ? इयाय । इययिथ ।

आयत ॥१९३॥ चस्यादेरत दीर्भवति लिटि परत । आटिथ । आटतु । आटु । आदिरिति किं ? ददे । दददाने । ददिरे ।

*नुङ् ॥१९४॥ चस्य ऋतदीर्घस्य नुगागमो भवति । आनग । आनगतु । आनगु । आनञ्ज।

अश्नो ॥१९५॥ अश्नोतेश्चस्य ऋतदीर्घस्य नुट् स्यात् । व्यानशे । व्यानशाते । व्यानशिरे । नियमार्थमिद–अश्नोतेरेवाद्यतादेः नुट् नान्यस्य । आटतु । आटु ।

भुवोऽत् ॥१९६॥ भवतेश्चस्य लिट्यत् भवति। बभूव । बभूवतु । बभूवु ।

निजामुच्येप् ॥ १९७ ॥ निजादीनामुचि परे चस्य एप् भवति । नेनेक्ति । वेवेक्ति।वेवेष्टि ।

*भृञ्हाङ्माभिः ॥१९८॥ एषां च इर्भवति उचि परे । बिभर्ति । जिहीते । मिमीते ।

प्रोः ॥१९९॥ पॄ ऋ इत्येतयोश्चस्य इर्भवति उचि परे । पिपर्ति । पिपृयात्।अपिपः। इयर्ति । इयृयात् । ऐयः ।

सन्यतः॥२००॥ चस्यातःसनि परे इर्भवति। पिपक्षति । पिपठिषति । अत इति किं?तुष्टूषति ।

ओःपुयण्ज्ये ॥२०१॥ चस्य उवर्णस्य पवर्गयणजकारेषु अवर्णपरेषु परतः सनीत्त्वं स्यात् । पिपावयिषति । बिभावयिषति । मिमावयिषति । यियावयिषति । रिरावयिषति । लिलावयिषति । जिजावयिषति । पुयण्जीति किं ? नुनावयिषति । ए इति किं ? बुभूषति । ओरिति वचनं ज्ञापकं णौ स्थानिवद्भावस्य ।

श्रुस्रुद्रुप्रुप्लुच्योर्वा ॥२०२॥ एषां अवर्णपरे याणि परतः चस्येत्वं स्यात् वा सनि परतः । शिश्रावयिषति । शुश्रावयिषति । सिस्रावयिषति । सुस्रावयिषति । दिद्रावयषति । दुद्रावयिषति पिप्रावयिषति । पुप्रावयिषति । पिप्लावयिषति । पुप्लावयिषति।चिच्यावयिषति । चुच्यावायिषति ।

*यङ्पोरेप् ध्यकिदाहाकः॥२०३॥ यङि यङुपि च परतःचस्य एप् भवति दीर्घ किदंतं आकारांतं हाकं च वर्जयित्वा । नेनीयते । नेनयीति । बोभूयते । बोभवीति । बोभुज्यते । बोभुजीति पापट्यते । पापठीति । पापच्यते । पापचीति । अकिदाहाक इति किं ? यंयम्यते । यंयमीति । रंरम्यते। रंरमीति।तंतन्यते। तंतनीति । जहाति । आकारग्रहणं किं ? जेहीयते ।

नीग्वंचुश्रंसुध्वंसुभ्रंसुकसपतपदस्कंदां ॥२०४॥वंच्वादीनां यङुपोःपरतश्चस्य नीगागमो भवति । वनीवच्यते । वनीवंचीति । शनीश्रस्यते शनीश्रंसीति । दनीध्वस्यते । दनीध्वंसीति । बनीभ्रस्यते । बनीभ्रंसीति । चनीकस्यते । चनीकंसीति । पनीपत्यते । पनीपतीति । पनीपद्यते । पनीपदीति । चनीस्कद्यते।चनीस्कंदीति।

ङस्याऽतो नुक् ॥२०५॥ चस्य ङसंज्ञकांतस्याऽतो नुगागमो भवति यङुपोःपरतः।जंगम्यते। जंगमीति । बंभण्यते । बंभणीति ।

जपजभदहदशभंजपशां ॥ २०६ ॥ जपादीनां चस्य यङुपोर्नुग् भवति। जंजप्यते । जंजपीति । जंजभ्यते । जंजभीति । दंदह्यते । दंदहीति । दंदश्यते । दंदशीति । बंभज्यते । बंभजीति । पंपश्यते । पंपशीति ।

*चर्फलामुच्चाऽतः ॥२०७॥ चर् फल् फल इत्येतेषां च यङुपोर्नुग्भवति अतश्च उत्वं । चंचूर्यते । चंचुरीति । पंफुल्यते।पंफुलीति ।

ति ॥२०८॥ तकारादौ परे तेषां अतः-उत्त्वं स्यात् । चूर्त्तिः । फुल्लिः । प्रफुल्ला लता ।

रीगृत्वतां॥२०९॥ ऋकारवतां चस्य रीगागमो भवति यङि परतः। वरीवृत्यते । दरीदृश्यते। परीपृच्छयते ।

रुक्रिक्चोपि ॥२१०॥ ऋत्वतां यङुपि चस्य रुक् रिक् रीश्चागमो भवति । चर्कर्त्ति । चरिकर्त्ति । चरीकर्त्ति ।नर्नर्त्ति । नरिनर्त्ति।नरीनर्त्ति । वर्वर्त्ति । वरिवर्त्ति । वरीवर्त्ति । उपीति किं ? नरीनृत्यते । ऋत्वतामिति किं ? चाकर्त्ति।जागर्ति।

णौ कच्यऽनग्लोपे सन्वत् ॥२११॥चस्य कच्परे णौ सनीव कार्यं भवत्यनग्लोपे । सन्यत इति इत्वमुक्तं कच्यपि तथा । अचीकरत् । ओः पुयण्ज्य इति । अबीभवत् । अलीलवत् । असिस्रवत् । असुस्रवत् । णाविति किं ? अततक्षत् । कचीति किं ? अहं पपच । अनग्लोप इति किं ?

स्तनमाल्यत्–अतस्तनत् । अदधनत् ।

*घेर्ङीरऽनजादे ॥२१२॥ अनजादेश्चस्य घेर्ङी र्भवति णौ ऊच्यरे अनन्त्ये । अजीहरत् । अबूबुधत् । घेरिति किम् ? अविग्रनत् । अनजादे रिति किं ? प्राणुनवत् । घाविति किं ? अररक्षन् ।

स्मृदत्वरप्रथम्रदस्तृस्पशोऽन् ॥ २१३ ॥ एषा चस्यात् भवति ऊच्यरे णौ परत । सन्वद्भा वापवाद । असस्मरत् । अददरत् । अतत्वरत् । अपप्रथत् । अमम्रदत् । अतस्तरत् । अपस्परत् ।

वा वेष्टिचेष्टयो ॥२१४॥ एतयोश्चस्य अच्य द्वा स्यात् । अववेष्टत् । अविवेष्टत् । अचचेष्टत् । अचिचेष्टत् ।

* गणश्चेः ॥२१५॥ गणयतेश्चस्य ऊचि वा ई र्भवति । अजीगणत् । अजगणत् । चकारादचीकथत् ।

इति जैनेन्द्रव्याकरणे शब्दार्णवचन्द्रिकायां
वृत्तौ पञ्चमस्याध्यायस्य
द्वितीयः पाद ॥२॥

# तृतीयः पादः ।

सर्वस्य द्वे ॥१॥ सर्वस्येति द्वे इति च एतद् द्वितयमधिकृत वेदितव्य । के द्वे ये शब्दतो ऽर्थतश्चानरतमे । वक्ष्यति वीप्सायामिति–ग्रामो ग्रामो रमणीय ।

परो म्रि ॥२॥ प्रकृतयोर्द्विरुक्तयो परोऽवयवो मिमनो भवति । माणवका३ माणवक । माणवक माणवक इदानीं ज्ञास्यसि जाल्म । म्रिप्रदेशा न म्रेरित्यादय ।

*भाग्भृशाऽर्भीक्ष्णाविच्छेदे ॥ ३ ॥ भृशा दिष्वर्थेषु वर्तमानस्य पदस्य वाक्यस्य वा द्वे रूपे भवत भागेव तरतमाद्युत्पत्ते । लुनीहि लुनीहि इत्येवाय लुनाति । अधीष्वाधीष्वेत्येवाऽयमधीते । भुक्त्वा भुक्त्वा व्रजति, भोज भोज व्रजति । चरति चरति ब्रह्मचर्य्य । भागिति किं ? पटति पठति तरा । एष्वेति किम् ? लुनीहि ।

+ नानैकार्थाधिक्यानुपूर्व्ये ॥ ४ ॥ नानैकार्थे आधिक्ये आनुपूर्व्ये चार्थे द्वे स्त । अस्मात्कार्षा पणादिह भवद्भ्या माष माष देहि । नानेति किं ? इह भवद्भ्या माष देहि । एकार्थ इति किं ? एकं द्वौ त्रीन् वा माषान्देहि । नमो नम । कन्या कन्या दर्शनीया । ज्येष्ठ ज्येष्ठ प्रवेशय । मूले मूले स्थूला । अग्रे अग्रे सूक्ष्मा ।

न चापले ॥ ५ ॥ चापलेऽर्थे द्वे भवत । अहि रहि । बुध्यस्व बुध्यस्व । हस्त्यागच्छति हस्त्या गच्छति । लघु पलायध्व लघु पलायध्व । पृथग्योगात् त्रिरपि प्रयोग । अहिरहिरहि ।

+ इतरडतमयो समाना स्त्रीभावे ॥ ६ ॥ समाना समत्वेन विचार्य्यमाणाना इतरडतमानस्य द्वे स्त स्त्रीलिङ्गे भावे । उभाविमावाढ्यौ कतर कतरा अनयोराढ्यता । कतमा कतमा अनयोरा-ढ्यता । इतरडतमयोरिति किं ? उभाविमावाढ्यौ कानयोराढ्यता । समानामिति किं ? आढ्योऽय कतराऽस्याढ्यता । स्त्रीति किं ? उभाविमावाढ्यौ कतरोऽनयोर्विभव । भाव इति किं? द्वौ इमौ लक्ष्मी-वतौ । कतराऽनयोर्लक्ष्मी ।

* पूर्वप्रथमस्याऽन्यातिशये ॥ ७ ॥ पूर्व-प्रथमयोर्द्वे भवत अन्यस्मादतिशयार्थे । पूर्वं पूर्वं पुष्यति । प्रथम प्रथम पच्यते । अन्यग्रहण किं? पूर्वतर पुष्यति । प्रथमतर पच्यते ।

× प्रौ पोत्समोऽग्रिपूर्तौ ॥ ८ ॥ एषां द्वे स्त अभिपूर्त्यर्थे ।

प्रप्रगम्य जिन भव्य समधित्य तप सम्यक् ।
उपोपपद्यते श्रेय उदुलत्वारोऽय ॥

*सामीप्येऽधोऽध्युपरि ॥ ९ ॥ एषां द्वे स्त सामीप्येऽर्थे । अधोऽधो नरका । अध्यधि दुःखानि । उपर्युपरि स्वर्गस्थानानि । सामीप्य इति

किं ? उपरि चन्द्रमा ।

* वाक्यादेर्वोध्यस्य कोपाऽसूयाऽसंमतौ ॥ १० ॥ वाक्यादेर्वोध्यस्य द्वे स्त कोपाद्यर्थेषु । माणवका३ माणवक । अविनीतका३ अविनीतक इदानीं ज्ञास्यसि जाल्म । माणवका ३ माणवक । वाक्यादेरिति किं ? शोभन खल्वसि माणवक। बोध्यस्येति किं उदारो देवदत्तो ददाति साधुम्य । कोपादिष्विति किं देवदत्त गामभ्याज शुक्ला दडेन।

*वीप्सायां ॥ ११ ॥ वीप्सार्थे द्वे भवत । वृक्ष वृक्ष सिंचति।कूपे कूपे जल।देशे देशे सुभिक्ष ।

एको ववत् ॥ १२ ॥ एकशब्द वीप्साया द्विरुक्तो वसवद्भवति । सुप्सुप्सुवत्भावौ प्रयोजन । एकैको भुंक्ते । एकैका याति ।

×द्वंद्व वा ॥ १३ ॥ वीप्सार्थे द्विशब्दस्य सुबंतस्य द्वद्व वा निपात्यते । द्वद्व तिष्ठत । द्वौ द्वौ तिष्ठत । द्वद्व कृत । द्वाभ्या द्वाभ्या कृत।

* रहस्यमर्यादोक्तिव्युत्क्रांतियज्ञपात्रप्रयोगे ॥ १४ ॥ रहस्याद्यर्थेषु सुबतस्य द्विशब्दस्य नित्य द्वद्वमिति निपात्यते । द्वद्व मन्त्रयते । आस प्तमनरकादधोऽधो द्वद्व नरकपटलानि हीनानि । द्वद्व व्युत्क्रांता ।पृथगवस्थिता इत्यर्थ । द्वद्वं यज्ञ पात्राणि प्रयुनक्ति ।

। ख्यातेऽभिव्यक्ते ॥ १५ ॥ ख्यातेऽभिव्यक्ते अत्यतसाहचर्येऽर्थे द्वद्व निपात्यते । द्वद्व नारद-पर्वतौ । द्वद्व रामलक्ष्मणौ । ख्यात इति किं ? द्वौ जिनदत्तगुरुदत्तौ । अभिव्यक्त इति किं ? द्वौ युधिष्ठिरार्जुनौ ।

* आबाधे ॥ १६ ॥ आबाधे पीडाया द्वे भवतः । बवच्च कार्यं । गतगत । नष्टनष्ट । पतितपतित । गतगता । नष्टनष्टा ।

* यवत् ॥१७॥ उत्तरे द्वित्वे यसस्येव कार्य्यं भवति । इत्येषोऽधिकारो ज्ञेय ।तत्रैवोदाहरिष्याम ।

प्रकारे गुणोक्तेर्वा ॥१८॥ प्रकारेऽर्थे गुणोक्तेर्द्वेवा स्त यवच्च कार्यं । पटुप्रकार पटुपटु । पटुपट्वी । मृदुमृदु । मृदुमद्वी। कालककालिका। पडितपडित । प्रकार इति किं ? शुक्ल । गुणोक्तेरिति किं ' गौर्वाहीक । वाग्रहणात्पटु जातीय । मृदुजातीय ।

प्रियसुखस्याऽकृच्छ्रे ॥ १९ ॥ प्रियसुखयोर-कृच्छ्रेऽर्थे वा द्वे स्त । प्रियप्रियेण ददाति । प्रियेण ददाति । सुखसुखेन,सुखेनाधीते जैनेंद्र । अकृच्छ्र इति किं ? प्रिय पुत्र । सुखो रथ ।सर्वे यातु यथायथमिति क्षिसशकं यथास्वमित्यस्मिन्नर्थे ।

परेर्वर्जने ॥ २० ॥ परेर्वा द्वे भवत वर्जनेऽर्थे । परिपरि त्रिगर्तेभ्यो वृष्टो देव । परित्रिगर्तेभ्यो वृष्टो देव ।वर्जन इति किं ओदन परिषिंचति।

पदस्य ॥ २१ ॥ पदस्येत्ययमधिकारो वेदितव्य आशास्त्रपरिसमाप्ते । तत्रैवोदाहरिष्याम ।

वाक्यस्य ॥ २२ ॥ अयमप्यासिद्धाधिकारात् ज्ञातव्य वक्ष्यति एकस्य तेमे" धर्मस्ते दीयते । धर्मो मे दीयते । वाक्यस्येति किं ओदन पच । तव भविष्यति मम भविष्यति ।

पदादऽपादादौ ॥ २३ ॥ पदादित्यपादादाविति च द्वयमधिकृत वेदितव्य । वक्ष्यति— बहोर्वस्नस् । धर्मो वो रक्षतु । पदादिति किं ? युस्मान् धर्मो रक्षतु । अपादादाविति किं ? शांतिनाथो जिन सोऽस्तु युष्माकमघशांतये । येन ससारतो भीतिरस्माकमिह नाशिता ।

युष्मदस्मदोऽविसास्थस्य वाम्नौ ॥ २४ ॥ वाक्यान्तयवात्पदात्परयोरपादादौ वर्तमानयो युष्मदस्मदो अप् इप् ता इत्येतासु स्थितयो वाम्नौ इत्येतावादेशौ भवत । ज्ञानं वा दीयते । शील नौ दीयते । ज्ञान वा रक्षतु । शील नौ रक्षतु । ज्ञान वा [illegible] शील नौ स्व।

अविप्रास्यस्येति किं ? दानं युवाभ्यां कृतं । आवाभ्यां कृतं । स्यग्रहणं श्रूयमाणविभक्त्यर्थं इह मा भूत् । इति युष्मदुपाध्यायो ब्रूते इत्यस्मदुपाध्यायो ब्रूते ॥

वद्वोर्वस्नस् ॥ २५ ॥ अविप्रासहंतयोःतयोर्वस्नसौ स्तः।ज्ञानं वो दीयते । शीलं नो दीयते । ज्ञानं वो रक्षतु । शीलं नो रक्षतु । ज्ञानं वः स्वं । शीलं नः स्वं ।

एकस्य तेमे ॥ २६ ॥ अस्येकांतयोस्तयोस्ते मे इत्येतावादेशौ भवतः । ज्ञानं ते दीयते । शीलं मे दीयते । ज्ञानं ते स्वं । शीलं मे स्वं ।

त्वामेपः ॥ २७ ॥ इवेकांतयोस्तयोः त्वा मा भवतः । मल्लिनाथस्त्वा रक्षतु । मुनिसुव्रतो मा रक्षतु ॥

न चवाहाऽहैवयोगे ॥ २८ ॥ चादिभिर्योगे तयोः वान्नावादयो न भवंति । ज्ञानं तुभ्यं च दीयते । मह्यं च दीयते । युवाभ्यां च दीयते । आवाभ्यां च दीयते । युष्मभ्यं च दीयते । अस्मभ्यं च दीयते । ज्ञानं त्वा च पातु । मां च पातु । युवां च पातु।आवां च पातु । युष्मांश्च पातु । अस्मांश्च पातु । ज्ञानं तव च स्व । ज्ञानं मम च स्व । युवयोश्च स्वं । आवयोश्च स्व । युष्माकं च स्वं । अस्माकं च स्वं । ज्ञान तुभ्यं वा दीयते । मह्य वा दीयते । तुभ्यं ह दीयते । मह्य ह दीयते । तुभ्यमह दीयते । मह्यमह दीयते । तुभ्यमेव दीयते । मह्यमेव दीयते । योगग्रहणं किं ! ज्ञानं च व.स्वं। शीलं च व स्वं ।

दृश्यर्थैश्चितायां ॥ २९ ॥ दृश्यर्थैर्बुभिश्चितायां वर्तमानैर्योगे तयोर्यदुक्तं तन्न भवति । ज्ञानं तुभ्यं दीयमानं संदृश्यागतो जनः । मह्यं दीयमानं संदृश्यागतो जन• । जनः त्वा समीक्ष्यागतः । मां समीक्ष्यागतः । जनस्तव कार्यमालोचयति । मम कार्य्यमालोचयति । दृश्यर्थैरिति किं ? जनो वो मन्यते । चिंतायामिति किं ? जनो नः पश्यति ।

वाऽनन्वादेशे ॥ ३० ॥ तयोर्वान्नावादयो वा भवंत्यनन्वादेशे । धर्म वा दीयते, युवाभ्यां दीयते । ज्ञानं नो दीयते, आवाभ्यां दीयते । धर्मो वां पातु, युवां पातु । जिनो नौ पातु, आवां पातु । धर्मो वां स्वं, युवयोः स्वं । धर्मो नौ स्वं, आवयोः स्वं । धर्मो वो दीयते । युष्मभ्यं दीयते । नो, अस्मभ्यं दीयते । धर्मं ते दीयते, तुभ्य दीयते । मे दीयते, मह्यं दीयते । जिनस्त्वा पातु, त्वा पातु । मा पातु, मां पातु।अनन्वादेश इति किं ? यूयं विनीतास्तद्वो गुरवो मानयंति । वयं शीलवंतः तन्नो गुरवो मानयंति । पूर्वं विनीतादिमादिश्य पश्चादिदमादिश्यते इत्यन्वादेशोऽर्थ्य।

*पदाद्वायाः॥३१॥पदात्परं यद्वर्तते तस्मात् परयोर्वान्नावादयो वा भवंति । विनीतस्त्वं आचार्य्येण ज्ञानं ते दीयते, तुभ्यं दीयते । मे दीयते, मह्य दीयते । एवं सर्व्वत्र ।

*योध्यं मामेव ॥ ३२ ॥योध्यांतं पदं ताभ्यां पूर्वं नेव—नास्तीव भवति । देवदत्त तुभ्यं दीयते। मह्यं दीयते । त्वां रक्षतु । मां रक्षतु।योध्यमिति किं ? जिनो वा पातु । शागिति।किं ? मयैतत्सर्व्वमाख्यात युष्माकं मुनिपुंगवाः ।

*नैकार्थे योध्ये जातिः॥ ३३ ॥ एकार्थे योध्याते परे जाति सामान्यवचनं योध्यांतं नास्तीव न भवति । क्षत्रिय श्रेणिक त्वार्हन् पातु । आशीर्दीयते ते आयुर्वर्द्धतां । एकार्थ इति किं ? क्षत्रिय ब्राह्मण युवा धर्मो दीयते । योध्ये इति किं ? क्षत्रिय धनवान् मे त्वं देहि । जातिरिति किं ! श्रेणिक क्षत्रिय तुभ्य धर्मो दीयते ।

*वा बद्दौ ॥ ३४ ॥ एकार्थे योध्ये बहुते वि-

शेषवचने जातिः योध्याता प्रागेव वा भवति। देवा शरण्याः वो दीयते, युष्मभ्य दीयते। नो दीयते। असभ्य दीयते। देवा शरण्या ते भवतु, तव भवतु। मे भवतु, मम भवतु।

पूर्वत्राऽसिद्ध ॥ ३५ ॥ पूर्वत्रेति च असिद्धमिति च एतत् द्वितयमाधिकृत ज्ञातव्य आशास्त्रपरिसमाप्ते। पूर्वस्मिन् शास्त्रे सार्द्धद्वि पादचतुरध्याये कर्त्तव्ये पर शास्त्र सार्द्धपादम सिद्ध भवति। इत उत्तर च पूर्वस्मिन् योगे कर्तव्ये परः परो योगोऽसिद्धो भवति। त आहु। द्वा इमौ। यवलस्याऽसिद्धत्त्वात् दी एषौ न स्त। अमुष्मै। अमुष्मात्। उत्वम्या सिद्धत्वात् स्मायादयो भवति। पचन्। नखे नखमसिद्धं।

शुष्किका यत्सुशर्माण क्षामिमानौजढसुगी। पक्कमाशीष्पु गोलिष्मान् कुर्वति पिपठीः सुसुत्।

नखं सुब्विधिकृत्तुकि ॥ ३६ ॥ सुप सुपि च विधि कृति तुक च मति नखमसिद्ध भवति। राजभि। राजभ्या। राजभ्य। ऐस्दी एश्च न भवति। वृत्रहभ्या। वृत्रहभि। नखाऽसिद्धत्वात्तुन्न भवति। सुब्विधिकृत्तुकीति किं? राजीयति। वृत्रहच्छत्र। नियमोऽय–एतयोरेव नखमसिद्ध नान्यत्र। हस्त्यश्व। राजावला।

न मु टाविधौ ॥ ३७ ॥ टास्थाने टानिमित्ते च विधौ कर्तव्ये मुभावोऽसिद्धो न स्यात्। अमुना मुत्वम्य सिद्धत्वात् सुलक्षणो नाभावः सुप्यदीत्व च सिद्ध।

+ तादेशस्त्यपे ॥ ३८ ॥ त्यविधौ पत्वविधौ च कर्तव्ये तसंज्ञकादेशोऽसिद्धो न भवति। क्षीवेण तरति–क्षीविक। वृक्ण। वृक्णवान्। त्यप इति किं? लग्न। लग्नवान्।

+ षो र्युत्तुकोः ॥ ३९ ॥ रेरत्वे छे तुकि च कर्तव्ये पत्विधिरसिद्धो न भवति। सुतपा ३ अत्र। अम्ना ३ छत्र।

– ष्यो नुस्वारे ॥ ४० ॥ ष्यविधिरनुस्वारे कर्तव्ये असिद्धो न भवति। नृण्हि।

– षतुक्तुर्द्वित्वे ॥ ४१ ॥ षत्व तुक्छुत्व च द्वित्वे सिद्ध न भवति। विपुपुषतु। उचिच्छिषति।

+ढादिर्द्वित्वे ॥ ४२ ॥ ढत्वादयो द्वित्वे कर्तव्ये सिद्धा न भवति। द्रोढा। द्रोढा। द्रोग्धा द्रोग्धा। गलो गल। गरो गर।

* नो मृदते खं ॥४३॥ मृदोऽते वर्त्तमानस्य नकारस्य ख भवति। राजा। राजभ्या। राजत्व। राजता। राजतरः। राजतम। मृदत इति किं? देवान्वदेरन्। नडाम्या। यनाम्य। पदस्येति किं? राजानौ। राजन।

न कौ ॥ ४४ ॥ पदान्तस्य नकारस्य ख न स्यात् कौ परे। हे राजन्। हे तक्षन्।

नपि वा ॥ ४५ ॥ नपुसके नख न स्याद्वा कौ परत। हेचर्मन्। हे चर्म।

ममोङ्झयो मतोर्वोऽयवादिभ्य ॥ ४६ ॥ मकारातादवर्णान्मकारोङोऽवर्णोङ झयताच्चो त्तरस्य मतोर्वत्व स्यात् यवादीन्विहाय। किम्वान्। इदम्वान्। शीलवान्। गुणवान्। विद्यावान्। लक्ष्मीवान्। यशस्वान्। भास्वान्। उदश्वित्वान्। ममोङ्झय इति किं? धीमान्। अयवादिभ्य इति किं? यवमान्। ऊर्मिमान्। भूमिमान्। चारुमतीत्यादि।

खौ ॥ ४७ ॥ खुविषये मतोर्वो भवति। कपीवती। ऋषीवती। अहीवती।

चर्मण्वत्यष्ठीवचक्रीवत्कक्षीवद्रुमण्वत्॥४८॥ एते निपात्यते खौ। चर्मण्वती नदी। नकारस्य खापवादो णत्व निपात्यते। अष्ठीवान् जघोरुसधि। अस्थिशब्दस्य अष्ठीभावो निपात्यः। चक्रीवान् राजगर्द्दभार्थे चक्रस्य चक्रीभावो निपात्यते। कक्षी-

वान्। ऋषिहम्त्यर्थे कभाशब्दस्य कक्षीभावः। रुमण्वान्। मत्रिपर्वतार्थे लवणस्य रमणभाव। खाविति किं ? चर्मवती। अस्थिमान्। चक्रवान्। कक्षावान्। लवणवान्।

* अब्धौ चोदन्वान् ॥ ४९॥ अब्धौ खौ च उदकस्य उदन्भावो निपात्यः। उदन्वान् घटो मेघश्च। उदन्वान् समुद्रः ऋषि, आश्रमश्च। उदकवानन्यत्र।

राजन्वान्सौराज्ये ॥ ५०॥ सौराज्येऽर्थे राजन्वानिति निपात्यते। राजन्वान् देशः। राजन्वती पृथ्वी। सौराज्य इति किं ? राजवान् देशः।

कृपो रो लोऽकृपादीनां॥५१॥ कृपे रेफस्य लत्व भवति कृपादीन्त्यक्त्वा। कल्पते। कल्पः। कल्पवान्। कल्प्यते। कल्पकः। अकृपादीनामिति किं ? कृपा। कृपणः। कृपाणः। कृपीटः। कर्पूरः। कर्पटः। कर्परः।

गे रयौ ॥ ५२॥ गे रेफस्य लादेशो भवत्ययतौ परतः। प्लायते। पलायते। अयाविति किं ? प्राय।

× निर्दुःप्रतेर्वा ॥ ५३॥ एषां रेफस्याऽयो लो वा भवति। निल्यते। निरयते। दुर्लयते। दुरयते। प्लत्ययते। प्रत्ययते।

परेर्यांकयोगे ॥ ५४॥ परे रेफस्य लो वा वा भवति धातौ परे। पलिघः। परिघः। पल्यंकः। पर्यंकः। पल्ययोगः। परियोग।

+डश्चर्फिडादीनां॥५५॥ऋफिडादीना रेफस्य डकारस्य च लो वा स्यात्। ऌफिड। ऋफिड। लोमानि। रोमाणि। कल्मं। कर्म। अल। अर। ऌफिल। ऋफिड। चूडा। चूला। गुल। गुड। पीला। पीडा। जल। जड।

* ग्रोऽचि ॥५६॥ गिरतेः रेफस्य लो वा भवत्यजादौ परतः। गिलति। गिरति। गालक। गारक। गलन। गरण। अचीति किं ? गीर्णं।

*यङि ॥५७॥ ग्रो रेफस्य यङि लो भवति। निजेगिल्यते। निजेगिल्यते। निजेगिल्यते।

* गरगल विषाऽप्यगे ॥ ५८॥ अनयोर्विषे प्राण्यगे च अल्त्वलत्वे निपात्येते। गरो विषं। गलः कण्ठ।

स्कांतस्य सं ॥ ५९॥ स्मसन्नकान्तस्य स भवति। भवान्। विद्वान्। श्रेयान्। पुम्या। पदृस्थेति किं ? भवतो।

रात् स ॥ ६०॥ रेफादुत्तरस्य सकारस्य स भवति। कटचिकी। जिहीं। मातु। नियमार्थोऽय योग। रेफात्सस्यैव सं नान्यस्य। ऊर्क्। न्यमार्ट्।

धि वा ॥६१॥ धकारादौ परत सखवा स्यात्। आध्व। आद्ध्व। आशाध्व। आशाद्ध्व। चकाधि। चकाद्धि।

झलो झलि ॥ ६२॥ झल परस्य सकारस्य झलि परे स भवति। अभैत्ता। अभित्त। अभित्था। अछित्त। अछित्था। झल इति किं ? अमस्त। झलीति किं ? अभैत्स।

प्राद्गोः ॥ ६३॥ प्रावाद् गो परस्य सकारस्य स स्यात् झलि परे। अकृत। अकृथा। प्रादिति किं ? अस्रोष्ट। अच्योष्ट। गोरिति किं ? अलाविष्टा।

स्फादे स्कोंऽते च ॥ ६४॥ सकारककारयो स्फादौ वर्तमानयो सं भवति झलि पदाते च। लग्न। लग्नवान्। साधुलट्। तट्। तष्टवान्। काष्ठतट्। आवष्ट। स्फादेरिति किं ? न्यस्त। शक्त। अते चेति किं ? लज्जिता। तक्षिता।

चोः कु ॥ ६५॥ चवर्गस्य कवर्गादेशो भवति झल्यते च। वक्ष्यति। वक्ता। वाक्। पक्ता। पक्तु। पक्तव्य। ओदनपक्।

हो ढ ॥ ६६॥ हकारस्य ढकारादेशो भवति

झल्यंते च । लेढा । लेढुं । लेढव्यं । गुडलिट् । वोढा । गुणवद् ।

दादेर्धोर्घः ॥ ६७ ॥ दकारादेर्धो हस्य घकारादेशो भवति झल्यते च । दग्धा । दग्धुं । दग्धव्यं । कर्मेंधनधक् । दादेरिति किं ? परीषहसट् । धोरिति किं ? दामलिट् ।

वा द्रुहमुहष्णुहष्णिहां ॥ ६८ ॥ एषां हकारस्य घो वा स्यात् झल्यंते च । द्रोग्धा । द्रोग्धुं । द्रोग्धव्यं । ध्रुक् । द्रोढा । द्रोढुं । द्रोढव्यं । ध्रुट् । मोग्धा । मुक् । मोढा । मुट् । स्नोग्धव्यं । स्नुक् । स्नोढव्यं । स्नुट् । स्नेग्धा । स्निक् । स्नेढा । स्निट् ।

नहो धः ॥ ६९ ॥ नहेर्हस्य धादेशो भवति झल्यंऽते च । संनद्धः । संनद्धवान् । नद्धा । नद्धुं । नद्धव्यं । परीणत् ।

आहस्थः ॥ ७० ॥ आहो हस्य थो भवति झलि । सत्यमात्थ त्वं ।

व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः ॥ ७१ ॥ व्रश्चादीनां छकारशकारयोश्च झल्यंते च षो भवति । व्रष्टा । व्रष्टुं । व्रष्टव्यं । कर्मवृट् । भ्रष्टा । भ्रष्टुं । भ्रष्टव्यं । धानाभृट् । स्रष्टा । स्रष्टुं । स्रष्टव्यं । तीर्थसृट् । मार्ष्टा । मार्ष्टुं । मार्ष्टव्यं । कर्ममृट् । यष्टा । यष्टुं । यष्टव्यं । देवेट् । राष्टिः । सुराट् । भ्राष्टिः । विभ्राट् । प्रष्टा । प्रष्टुं । प्रष्टव्यं । धर्मप्राट् । वेष्टा । वेष्टुं । वेष्टव्यं । विट् ।

∸परिव्राट् ॥७२॥ परेर्व्रजेर्डत्वं निपात्यते पदाते ।

एकाचो बशो भष् झषः स्ध्वोः ॥ ७३ ॥ धोरेकाचो झषंतस्य योऽवयवो बश् तस्य भष् स्यात्, सकारे ध्वे च पदांते च । भोत्स्यते । अभुद्ध्वं । धर्मभुत् । घोक्ष्यते । अघुद्वं । मंत्रधुट् । धोक्ष्यते । अधुग्ध्वं । गोधुक् । एकाच इति किं ? दामलिह्यतीति क्विप्-दामलिट् । बश इति किं ? क्रोत्स्यति । झष इति किं ? दास्यसि । स्ध्वोरिति किं ? बोद्धा ।

धः ॥ ७४ ॥ दधातेर्झषंतस्य बशो भष् स्यात् झलि परतः । धत्से । धत्त । धत्तेः । धत्थः ।

∸यङ्लोऽन्येषां ॥७५॥ दधातेर्यङ्लुबंतस्य बशो भष् भवति झल्यन्येषामाचार्याणां मतेन । धात्तः । धात्थः । दात्तः । दात्थः ।

*धेस्तथोः ॥ ७६॥ धेटो यङ्लुबंतात्परयोस्तथोरेकेषां मतेन भष्स्यात् । दाद्धः । दाद्धः । दात्तः । दात्थः ।

* अधः ॥ ७७ ॥ अदधातेः झषंतात्तथोर्भष् स्यात् । लब्धा । लब्धुं । लब्धव्यं । अलब्धं । अलब्धाः । दोग्धा । दोग्धुं । दोग्धव्यं । अध इति किं ? धत्तः । धत्थः ।

झलो जश् ॥ ७८ ॥ झलः पदांते वर्तमानस्य जश् भवति । सुवागाचार्य्यः । तत्वविद्याति । अजत्र । त्रिष्टुब् ।

षढोः कः सि ॥ ७९ ॥ षकारढकारयोः ककारादेशो भवति सकारादौ परतः । पक्ष्यति । तोक्ष्यति । लेक्ष्यति । वक्ष्यति । सीति किं? द्वेष्टि ।

*द्राद्स्य तो नोऽमत्पूमूर्छां ॥ ८० ॥ दकाररेफाभ्यां परस्य तसंज्ञकस्य तकारस्य नत्वं भवति दस्य च पूर्वस्य–मदादींस्त्यक्त्वा । भिन्नः । भिन्नवान् । छिन्नः । छिन्नवान् । गूर्णः । गूर्णवान् । चॄ आचरणे । चीर्णः । चीर्णवान् । द्रादिति किं ? मुक्तः । मुक्तवान् । तस्येति किं ? भित्तिः । अमत्पूमूर्छामिति किं ? मत्तः । मत्तवान् । पूर्तः । पूर्तवान् । मूर्तः । मूर्तवान् ।

स्फादेरोता धोर्यण्वतोऽख्याख्यः ॥ ८१ ॥ स्फादेर्ख्यातिख्यावर्जितादाकारांताद्धोर्यण्वतः परस्य तसकारस्य नो–भवति । संस्त्यानः । संस्त्यानवान् । निद्राणः । निद्राणवान् । ग्लानः ।

ग्लानवान् । स्फादेरिति किं ? यातः । यातवान् । आत इति किं ? च्युत । च्युतवान् । घेरिति किं ? निर्यातः । यण्वत इति किं ? प्सातः । अधात्स्य इति । किं ? ध्यात । ध्यातवान् । ख्यात । ख्यातवान् ।

ल्वादे ॥ ८१ ॥ ल्वादिभ्यः ततस्य नकारादेशो भवति । लूनः । लूनवान् । जीनः । जीनवान् । धून । लीनः ।

ऋतश्च क्ते ॥ ८२ ॥ ऋकारान्तेभ्यो ल्वादिभ्यश्च क्तेस्तकारस्य नो भवति । कीर्णिः । धूनिः । लूनि ।

ओदितः ॥८४॥ ओकारेतस्तकारस्य नो भवति । पीन । पीनवान् । भग्न । भग्नवान् ।

* क्षय ॥ ८५ ॥ कृतदीत्वात् क्षेस्तकारस्य नो भवति । क्षीणः । क्षीणवान् । दीत्वनिर्देश किं ? क्षितोऽसि जाल्म ।

* त्राघ्राघ्राह्रीनुदोंदाविर्त्तेर्वा ॥८६॥ एभ्यस्ततकारस्य नो वा स्यात् । त्राण । त्रात । त्राणवान् । त्रातवान् । घ्राण । घ्रात । घ्राणवान् । घ्रातवान् । घ्राणः । घ्रात । घ्राणवान् । घ्रातवान् । ह्रीण । ह्रीत । नुन्नः । नुत्त । समुन्न । समुत्त । विन्नः । वित्तः ।

श्याचिदिवोऽस्पर्शापादानजये ॥ ८७ ॥ एभ्य ततकारस्य नो भवत्यस्पर्शादौ । प्रतिशीन । समक्षौ । शकुनेः पक्षौ । आद्यून । अस्पर्शादाविति किं ? शीतो वात । उदक्तमुदक कूपात् । द्यूत वर्तते ।

प्वो नाशे ॥ ८८ ॥ पुनातेस्ततकारस्य नो भवति नाशेऽर्थे । पूना यवा । नाशे इति किं ? पूत धन ।

सेः कर्मकर्त्तरि ग्रासे ॥ ८९ ॥ सिनोतेस्ततस्य नो भवति ग्रासे कर्मणि कर्तृत्वेन विवक्षिते। सिनो ग्रास स्वयमेव । कर्मकर्त्तरीति किं ? सितो गलो ग्रासेन । ग्रास इति किं ? सिता पाशेन शूकरी ।

निर्वाणोऽवाते ॥ ९० ॥ निस्पूर्वाद्वाते स्ततस्य नो निपात्यतेऽवातेऽर्थे । निर्वाणो मुनि । अवात इति किं ? निर्वातो वात ।

दुग्वो दीश्च ॥ ९१ ॥ दुगुभ्या ततकारस्य नो भवति तत्सन्नियोगे दीश्च । दून । दूनवान् । गूनः । गूनवान् वत्सः ।

शुष्पचोः क्वौ ॥ ९२ ॥ आभ्या ततकारस्य ककारवकारादेशौ स्त । शुष्क । शुष्कवान् । पक्व । पक्ववान् ।

क्षो मः ॥ ९३ ॥ क्षायतेस्ततकारस्य मादेशो । भवति । क्षाम । क्षामवान् ।

प्रस्त्यो वा ॥ ९४ ॥ प्रस्त्यायतेस्ततकारस्य मो वा स्यात् । प्रस्तीत । प्रस्तीम । प्रस्तीतवान्, प्रस्तीमवान् । प्रपूर्व किं ? सस्त्यानवान् ।

फुल्लः ॥९५॥ फुलेर्विसरणार्थात्तस्य लो निपात्यते । फुल्लो वनस्पतिः ।

समुदः ॥ ९६ ॥ समुद्भ्या परः फुल्लो निपात्यः । सफुल्लः । सफुल्लवान् । उत्फुल्ल । उत्फुल्लवान् । नियमार्थमिद समुद्भ्यामेव नान्यस्माद्धि । प्रफुल्ता लता ।

क्षीबकृशोल्लाघाः ॥ ९७ ॥ क्षीबादीना त शब्दस्य ख निपात्य । क्षीब । क्षीबवान् । कृशः कृशवान् । उल्लाघः । उल्लाघवान् ।

*भित्त शकल ॥ ९८ ॥ भिदेः क्तस्य नत्वाभावो निपात्य- शकलार्थश्चेत् । भित्त । दारुखण्डमित्यर्थः । भिन्नमन्यत् ।

*वित्त ख्यातार्थे ॥ ९९ ॥ लाभार्थाद्विदेः क्तस्य नत्वाभावो निपात्य ख्यातपर्यायोऽर्थपर्यायो वा भवति चेत् । वित्त विख्यात । वित्त धन । विन्नमन्यत् ।

क्तिस्य कुः ॥१००॥ क्तिस्यो यस्य तस्य धो

कुत्वं भवति। हृदयस्पृक्। तादृक्। अस्मादृक्। स्पृग्रहणात्सहृत्सदृगिति सिद्ध।

*नशेर्वा ॥ १०१ ॥ नशेः घोः पदस्य कुर्वा भवति। जीवनक्। जीवनट्।

ससजुषो रिः ॥१०२॥ सकारस्य पदांतस्य सजुषश्च रिर्भवति। जिनः। संयतः। सजूः।

अह्नः॥१०३॥ अहन्नित्यस्य पदस्य रिर्भवति। अहोभ्यां। अहोभिः। दीर्घाहाः कालः।

×रूपरात्रिरथांतरे ॥ १०४ ॥ अह्नो रिर्भवति रूपादिषु परतः। अहोरूपं गत। अहोरात्रिरागता। अहोरथांतरं। एष्विति किं? अहर्ददाति।

रोऽसुपि ॥ १०५ ॥ अह्नो रेफादेशो भवति असुपि परे। अहः। अहरेति। अहर्गच्छति। असुपीति किं? अहोभ्यः।

॥ वाऽहर्पत्यादिषु ॥१०६॥ अहरादीनां पत्यादिषु रो वा स्यात्। अहर्पति। अहःपतिः। गीर्पतिः। गीःपतिः। प्रचेता राजः।प्रचेतो राजः

वसुस्रंसुध्वंस्वनडुहां दः ॥ १०७ ॥ वस्वादीनां सकारहकारयोः दकारादेशो भवति। सुविद्वन्। सुविद्वद्भ्यां। उखास्रत्। पर्णध्वत्। उखास्रद्भ्यां। पर्णध्वद्भ्यां। स्वनडुत्। स्वनडुद्भ्यां। स्वनडुद्भिः। पदस्येति किं? विद्वस्यति।

तिपि घोः ॥१०८॥ घोः सकारस्य तिपि दो भवति। अचकाद्भवात्। अन्वशाद्भवान्।

सिपि रिर्वा ॥१०९॥ घोः सकारस्य वा रिर्भवति सिपि परतः। पक्षे दश्च। अचकास्त्वं, अचकात्त्वं। अन्वशास्त्वं, अन्वशात्त्वं।

दः ॥११०॥ घोर्दकारस्य रिर्वा भवति सिपि। पक्षे दः। अभिनस्त्वं। अभिनत्त्वं।

मो नः ॥ १११ ॥ घोर्मकारस्य नो भवति। प्रशान्। प्रदान्। प्रदान्भ्यां। प्रतान्। प्रतान्भ्यां।

म्वोः ॥ ११२ ॥ घोर्मकारस्य नादेशो भवति मकारवकारयोः। जंगन्मि। जंगन्वः। जंगन्मः।

र्वो वोरिगुडः ॥ ११३ ॥ रेफवकारांतस्य घोरिकः उङः दीर्भवति। गीः। धूः। पूः। आशीः। गीर्भ्यां। धूर्भ्यां। घोरिति किं? मुनिः।

हल्यभकुर्छुरः ॥ ११४ ॥ हलि परे रेफवकारांतस्य भ कुर्छुर्वर्जितस्य घोरिगुङः दीर्भवति। गीर्णः। शीर्णः। विस्तीर्णः। दीव्यति। सीव्यति। अभकुर्छुर इति किं? धुर्यः। दिव्यः। कुर्यात्। छुर्यात्।

उडोः ॥११५॥ उङ्भूतयो रेफवकारयोरिगुङः दीर्भवति। कूर्दते। तूर्वति। कीर्त्यति। प्रतिदीव्ना। प्रतिदीव्ने।

दादुदौ मोऽदसोऽसेः ॥ ११६ ॥ अदसोऽसकारस्य दात्परस्य वर्णमात्रस्य उत्वं दस्य च मत्वं स्यात्। अमु। अमी। अमून्। अमूभ्या। असेरिति किं? अदस्यति। अदः कुलं।

×वाऽद्रेः ॥ ११७ ॥ अद्र्यंतस्याऽदसो दात्परस्य वर्णमात्रयोरुत्वं दस्य च मो वा भवति। अत्राचार्य्यमतभेदा—

परतः केचिदिच्छंति केचिदिच्छंति पूर्वतः।
उभयोः केचिदिच्छंति केचिदिच्छंति नोभयोः॥

अदमुयङ्। अमुद्र्यङ्। अमुमुयङ्। अदद्र्यङ्।

बहुष्वेरीः ॥ ११८ ॥ बहुषु वर्तमानस्याऽदसो दात्परस्यैकारस्य ईत्वं स्यात्। अमी। अमीभिः। अमीभ्यः। अमीषां। अमीषु। बहुष्विति किं? अमू कन्ये।

वाक्यटेः पः ॥ ११९ ॥ वाक्यस्य टेः पो भवतीत्येषोऽधिकारो वेदितव्यः। दूरादूते। आगच्छ भोः जिनदत्त३। वाक्यग्रहणं किं? पदानां मा भूत्। टेरिति किं? अनंत्यस्याप्यचो यथा स्यात्। धर्मवी३त्।

*भोश्च प्रत्यऽभिवादेऽस्त्रीशूद्रे वा ॥१२०॥ स्त्रीशूद्रवर्जिते प्रत्यभिवादे वर्तमानस्य वाक्यस्य टेः पो वा स्यात् भोःशब्दस्य च। अभिवादये देवदत्तोऽहं भोः। आयुष्मानेधि देवदत्त ३। आयुष्मानेधि देवदत्त। अभिवादये, देवदत्तोऽहं भोः। आयुष्मानेधि भोः ३ ॥ आयुष्मानेधि भोः। अस्त्रीशूद्र इति किं? अभिवादये-गार्ग्यहं भोः। आयुष्मती भव गार्गि। अभिवादये रुपजकोऽहं भोः। कुशल्यसि रुपजक।

*दूराद्धूते ॥ १२१ ॥ दूरात् धूते-आहूयमाने वाक्यस्य टेः पो वा स्यात्। आगच्छ भो जिनदत्त ३ ॥ पक्षे न भवति।

हैहेष्वेषामेव ॥ १२२ ॥ हैहयोः प्रयोगे तयोरेव पो वा भवति। है ३ देवदत्त आगच्छ।आगच्छ है ३ देवदत्त। है देवदत्त आगच्छ।आगच्छ है देवदत्त। हे ३ गुरुदत्त।हे ३ देवदत्त आगच्छ।आगच्छ हे३ गुरुदत्त। पक्षे-हे गुरुदत्त आगच्छ। गुरुदत्त आगच्छ हे ॥

* लनृतोऽनंत्यस्याऽप्येकस्य रोः ॥१२३॥ लकारस्य ऋद्वर्जितस्य च रोरनंत्यस्यांत्यस्यापि टेश्च एकस्य पो वा स्यात्। आगछ हे क्ल ३ स शिख। आगछ हे क्लृप्तशिखा ३। आगछ हे क्लृप्तशिख। दे३ वदत्त। देवदा ३ त्त। देवदत्ता ३। पक्षे न भवति-देवदत्त। अनृत इति किं? कृष्णमी ३ त्र। कृष्णमित्रा ३। रोरिति किं? देवदत्त। वकारात्परस्य मा भूत्। एकस्येति किं? अनेकस्य रोः टिना च सहायौगपद्यार्थं ॥

*ओं मारंभे ॥ १२४ ॥ ओमित्येष प्रारंभे प्रणामाद्यभ्यादाने पो वा स्यात्। ओ३म् वृषभं पवित्रं प्रणमत। पक्षे ना।प्रारंभ इति किं? ओं ददामि।

हेः पृष्टोक्तौ ॥ १२५ ॥ पृष्टोक्तौ प्रतिवचने हेः पो वा स्यात्। अलावीः केदारं देवदत्त। अलाविं ही ३। अलाविषं हिपृष्टोक्ताविति किं? अकार्षं हि कट देवदत्त।

* चिर्तीवे ॥ १२६ ॥ चिदित्येतस्मिन्निवार्थे प्रयुज्यमाने वाक्यस्य टेः पो वा स्यात्। राजा चिद् ब्रूया३त् ।पक्षे न। चितीति किं? अग्निरिव भायात्। इव इति किं? कथंचिदाह।

*प्राचो विचारे ॥१२७॥ विचारे वर्तमानस्य प्राचः पूर्वस्य वाक्यस्य टेः पो वा भवति। अहिर्नु ३ रज्जुर्नु। अहिर्नु रज्जुर्नु। स्थाणुर्नु ३ पुरुषो नु। पक्षे न।

* प्रतिश्रुतिषु ॥ १२८ ॥ प्रतिश्रवणादिषु वर्तमानस्य वाक्यस्य टेः पो वा भवति। गां मे देहि भोः। हंत ते दास्यामि ३।अनित्यः शब्दो भवितुमर्हति ३। देवदत्त भोः किमात्थ ३।

पूजिते ॥ १२९ ॥ पूजितेऽर्थे टेः पो वा भवति। शोभनः खल्वसि देवदत्ता३। पक्षे न।

* कोपादौ प्रौ ॥१३०॥ कोपादिष्वर्थेषु टेर्वा पो भवति प्रौ परतः। माणवक३माणवक। अविनीतक ३ अविनीतक। इदानीं ज्ञास्यसि जाल्मेत्यादि। न च पक्षे।

*भर्त्सेऽन्यतरस्य ॥१३१॥भर्त्सनेऽर्थेऽन्यतरस्यैकस्य वा पो भवति। चोरा३ चौर चोर बंधयिष्यामि त्वा। मारयिष्यामि त्वां।

* मिङोऽपेक्षस्यांगेन ॥१३२॥ भर्त्सेऽर्थे मिङंतस्य वाक्यांतरपदाकांक्षस्य वा पो भवत्यंगशब्देन योगे। अंग कूजा ३ इदानीं ज्ञास्यसि जाल्म। पक्षे न। मिङ इति किं? अंग देवदत्त मिथ्या वदसि-। अंगेनेति किं? देवदत्त कूज इदानीं ज्ञास्यसि जाल्म। भर्त्से इति किं?अंगाधीष्व मोदकं दास्यामि।

*संयाज्ञीःप्रैषे ॥१३३॥ एष्वर्थेषु मिङंतस्य वाक्यांतराकांक्षस्य टेः पो वा भवति। स्वयं द्यो-

दन मुक्ते३ उपाध्याय शक्तून् पाययति। पुत्रांश्च लप्सीष्ट ३धन चाकट कुरू ३ग्राम च गच्छ।पक्षे ना।

*प्रश्नोक्तयो प्रतिपद ॥१२४॥ प्रश्ने तदुक्तौ च प्रतिपद टे पो वा भवति। अगमा:३ पूर्वा३न् ग्रामा ३न् देवदत्ता ३। अगमा३म् जिन दत्ता ३। पक्षे न। प्रश्नोक्त्योरिति किं? त्वं ग्राम गच्छ।

*प्रश्नाऽर्चाविचारमत्यभिवादेष्वेचोऽन्तेऽदेरादि दुत्पर ॥१२५॥ प्रश्नादिष्वर्थे वाक्यस्याते वर्तमान स्यादिसज्ञकस्य एच आकार: पो भवन् इदुत्पर आकार: पो भवति। अदास्तस्मा३ इ। अदा पटा३ उ। शोभन: खल्वसि अग्निभूता ३ इ। शोभन: खल्वसि। पटा३ उ अध्येतव्य। गृहा ३इ उत वसतौ। आयुष्मती स्त: पुत्रपुत्रा उ।प्रश्नादिष्विति किं?दस्यो३ घातयिष्यामि त्वा। एच इति किं? भद्रकासि कुमारी३। अत इति किं? भद्रोऽसि गौ: ३। अदेरिति किं? अपा क्षा३म् ओदन।३म् कन्ये३।

एचऽचि सधौ ॥१२६॥ एच: स्थाने यौ इदुतौ तयोरिदुतोरचिपरे यकारवकारादेशौ स्त: सधिविवक्षायाम्। अग्ना३यिद। पटा३वत्र। अचीति किं? अग्ना३इ गत। पटा३ उ गत। सधाविति किं? अग्ना३इ इद। सधावित्याधिकार श्चाचतुष्टयात्।

इति जैनेंद्रव्याकरणे शब्दार्णवचन्द्रिकायां वृत्तौ पचमस्याध्यायस्य तृतीय पाद:।

## चतुर्थः पादः।

पुम: खय्यम्परे सींसुक् ॥१॥ पुम इत्येतस्य यदस्य पदाते वर्त्तमानस्य अम्परे खयि परत सीरादेश: सुक्चागम: पर्यायेण भवत। पुँस्खात, पुस्खात। पुँस्कोकिल:। पुम्कोकिल:। पुमा ■ चालयतीति पुँश्चली। पुश्चली,। पुँस्पुत्रा। पुस्पुत्रा।खयीति किं? पुगव:। पुनाग:। पुदास:। अम्पर इति किं? पुंक्षुर:।

नश्छव्यऽप्रशान् ॥२॥ नकारस्य पदातस्याम्परे छवि सी सुकौ स्त: प्रशान्शब्द विहाय। भवाँश्छादयति। भवाँष्ठकारीयति। भवाँस्तुडति। भवाँश्चरति। भवाँष्टीकते। भवाँस्तरति। छवीति किं? भवान् करोति। अप्रशानिति किं? प्रशान् चिनोति। अम्पर इति किं? भवान्त्सरुक:।

कांस्कान् ॥३॥कान्शब्दस्य कानि परे सी सुकौ निपात्यौ। कॉंस्कान्। कास्कान्पश्य।

समः स्कुसि ॥४॥ समुदकस्य कृञ:सकारे परे सम सी सुकौ स्त:। सँस्कर्त्ता। सस्कर्ता। स्कुग्रहण किं? सस्मरति। सीति किं? सचस्कार।

+नृन पि रीरुक्वा ॥ ५ ॥ नृन्शब्दस्य पकारे परे रीरादेश: रुक्चागम: पर्यायेण स्त:। नॄँ:पाहि। नॄँ पाहि। नृन्पाहि।

भगवद्भवत्त्वघवतो रि काव्ऽवस्यौ: ॥६॥ एषा को रिर्वा भवति तदैवाऽवशब्दस्य च ओत्व। हे भगो:। हे भगवन्। हेभो। हे भवन्। हे अघो:। हे अघवन्। काविति किं? हे भगवतौ। हे भवतौ। हे अघवतौ।

*ओदाद्योऽशि॥७॥ प्रकृतात् ओकारादव र्णाच्च परस्य रेर्यो भवति–अशि परत:। भगोयत्र भोयत्र। कयास्ते। देवायासते। प्रकृतौकार किं? गोरत्राअशीति किं?भो खनसिरिरीति किं?पुनरत्र।

+व्योऽस्पष्ट ख ॥८॥ ताभ्यां वकारयकारयोरस्पष्ट: ख च भवत्याशि परत। भोयत्र। भो अत्र। पटवु। पट उ। तवु। त उ। पदस्येति किं? नयन।

–त्राऽनुस्यात् ॥ ९ ॥ अवर्णान्तादुद्योरम्पष्टः स च वा भरयुर्न्वर्जितऽस्मि परत । पटविह । पट इह । पटविह । तवाहु । तआहुः। तयाँहुः। अनुनीति किं ? पटवु । पट उ । आदिति किं ? अयोयत्र । अयो अत्र ।

हलि ॥ १० ॥ य्योः ख भवत्याशी हलि परत । नित्यार्थमिद । भगो देहि । देवा याति । वृक्षहसति । आशी हलीति किं ? वृक्षन् करोति ।

*नुग्मोऽम् ॥ ११ ॥ नुकः मकारान्तस्य च पदस्य अ इत्यनुस्वारो भवति हलि परे । य पम्यते । धर्मं शृणोति । पाप हसि । हलीति किं ? इदमत्र ।

नश्चाऽपदान्ते झलि ॥ १२ ॥ नकारस्य मकारस्य चापदान्ते वर्तमानस्य अ भवति झलि परतः। यशासि । तेजांसि । पुसि । अपदात इति किं? भगवान् शांतः। झलीति कि ? गम्यः ।

सम्राट् ॥ १३ ॥ समो मकारस्य मकार एव निपात्यः राजनौ क्यन्ते परत. ।सम्राट् भरत ।

ङण कुक् टुक् शरि वा ॥१४॥ ङकारणकारयो कुक् टुकौ वा स्तः शरि परे । प्राङ्क्षेते । प्राङ्क्छेते । प्राङ्शेते।सुगण्ट्छेते। सुगण्ट्शेते ।सुगण् शेते । शरीति किं ? प्राङ्करोति ।

नश्छि तुक् ॥ १५ ॥ पदान्तस्य नकारस्य शकारे तुग्वा स्यात् । कुर्वंन्च्छेते । कुर्वन्त्शेते कुर्वन्शेते । शीति किं ? कुर्वन्पदः।

ङ्नाद् धुट् सोऽश्चः॥१६॥ ङकारान्तनकारा ताश्च सकारस्य ढचोऽव्ययवर्तिनस्य धुडागमो भवति। मधुलिट्त्सीदति । मधुलिट्सीदति ।महान्त्साधुः। महान्साधुःम इति किं?मधुलिड् पंडे । अश्च इति किं ? अरश्चोतति ।

मयो वोञ्चुत्र ॥१७॥ मयः परस्य उञः वो वा भवति अचि परे । शम्वत्र । शमु अत्र । निम्बुण । किमु उण्ण । तद्वस्य मत । तदु अस्य मत । मय इति किं?स्वरु उपैति । अचीति किं ? शमु भवतु ।

ङमो ङमुट् तु मात् ॥१८॥ मात्परो यो ङम् तदतात्परस्याऽचः नित्य ङमुट् भवति ।कुङ्ङास्ते। सुगण्णिह । कुर्वन्नास्ते ।मादिति किं?मादास्ते । अचीति कि ? पठन् रमते ।

ढो ढि खं ॥१९॥ ढकारस्य ढकारे परे ख भवति । गूढ । लीढ ।

रो रि ॥ २०॥ रेफस्य रेफे परे खं भवति। अग्नीरथेन। पुनारमते ।

* अंतेऽ ॥२१॥ अन्ते वर्तमानस्य रेफस्य अः इति विसर्जनीयो भवति । देवः । कविः । प्रात । अंत इति किं ? स्वरत्र ।

शर्परे खरि ॥२२ ॥ रेफस्य विसर्गो भवति शर्परे खरि परतः। नरः त्सरुकः । पुरुषःत्सरति।

कुप्वोः ॥ २३ ॥ रभूतयो कवर्गपवर्गयो शर्परे खरि परत रेफस्य विसर्गो भवति । वासः क्षौम । अद्भिः प्सात ।

ᳲᳳ पौ च ॥२४॥ खरि सिवर्योःकुप्वोः परतः रेफस्यᳲकᳳप इत्येतावादेशौ भवतः विसर्गश्च । अनᳲकरोति, अंतः करोति । कᳲखनति । कः खनति । अनᳳपचति । अन्तः पचति । कᳳफलति । कः फलति । कुप्वोरिति किम् ? कथयति ।

शरि सश्च ॥ २५ ॥ रेफस्य सकारादेशो भवति विसर्गश्च शरि परतः। कश्शेते । कःशेते। कष्षंडे । कः षंडे । कस्सरति । कः सरति । अनश्शोभते । अनःशोभते।शरीति कि? क पठति।

वेश्च शुपि ॥ २६ ॥ शरि शुपि रे सो भवति विसर्गश्च । पयस्सु । पयःसु । पर शुपिविसर्गोऽस्य योग । रेरिदागमनुपरस्यैव शुपि सत्वविसर्गौ

नान्यस्य । गीर्षु । धूर्षु ।

। खय्परे खं वा ॥ २७ ॥ खय्परे शरि रेफस्य खं भवति वा। चेतस्स्खलति। चेतःस्खलति। चेत स्खलति । कस्स्पदति । कःस्पदति । कः स्पदति। खय्पर इति किं ? क सरति। कस्सरति ।

छवि ॥ २८ ॥ रेफस्य सकारादेशो भवति छवि परत । कश्छिनत्ति। कष्टकारः । कस्थुडति। कश्चरति । कष्टीकते । कस्तरति ।

कुप्वोस्त्ये ऽज्ञेः सिः ॥ २९ ॥ कवर्गपवर्गौ दौ त्ये परे झिसंज्ञितस्य रेफस्य सिर्भवति। काम्य कल्प पाशेपुदाहरणं । यशस्काम्यति । पयस्कल्पं । सर्पिष्क । पयस्पाश । त्य इति किं ? पयः पिबति । अज्ञेरिति किं ? मुहुः काम्यति ।

* रेरेव काम्ये ॥३०॥ रेरिकारानुबन्धस्यैव काम्ये त्ये सिरादेशो भवति नान्यस्य । पयस्काम्यति। रेरिति किं ? धू काम्यति ।

* निर्दुर्बहिश्चतुराविःप्रादुसः ॥ ३१ ॥ निरादीनां रेफस्य सिर्भवति कुप्वो परत । निष्कृ । निष्पेय । दुष्कृत । दुष्पीत । बहिष्कुरु । बहिष्पिब । चतुष्क । चतुष्पदी । आविष्कृत्य । आविष्पठ । प्रादुष्कुर्यात् । प्रादुष्पच ।

नमःपुरसोस्त्योः॥३२॥एतयोस्तिसंज्ञयो रेफस्य सिर्भवति कुप्वो परतः। नमस्कृत्य । नमस्कर्त्ता। नमस्कर्तुं। नमस्कर्तव्यम्। पुरस्कृत्य । पुरस्कर्ता। त्योरिति किं ? नम कृत्वा । पुर कृत्वा

तिरसो वा ॥ ३३ ॥ तिरसो रेफस्य सिर्वा भवति । तिरस्कृत्य । तिर कृत्य । तिरस्कर्ता । तिरः कर्ता ।

सुच ॥ ३४ ॥ सुजन्तस्य रेफस्य सिर्वा स्यात् कुप्वो परतः। द्विष्कुर । द्विःकुरु । द्विःकुरु । द्विष्पठ । द्विःपठ। द्वि पठ। त्रिष्करोति। त्रिःकरोति । त्रि करोति । त्रिष्पचति । त्रिःपचति। त्रि पचति । चतुष्करोति । चतुःकरोति । चतु करोति । चतुष्पठति ।चतुःपठति । चतु पठति ।

इसुसोऽपेक्षायाम् ॥ ३५ ॥ इसुसतस्य रेफस्य सिर्वा स्यात् कुप्वोरन्योन्यापेक्षायाम् । सर्पिष्करोति । सर्पिःकरोति । सर्पिः करोति । सर्पिष्पिबति । सर्पिःपिबति।सर्पि पिबति । धनुष्खडयति। धनुःखडयति।धनु खडयति।धनुष्पाति। धनुःपाति । धनुः पाति । इसुस इति किं ? पयःकुरु। अपेक्षायामिति किं ? तिष्ठतु सर्पिः पिबत्वम् ।

नैकार्थेऽक्रिये ॥ ३६ ॥ इसुसोरेफस्य सिर्न भवति क्रियापदर्हानैकार्थपदस्थयो कुप्वोरपेक्षायां। सर्पिः कालक । यजुः पीतक । एकार्थ इति किं ? सर्पिष्कुम्भे । अक्रिय इति किं ? सर्पिष्क्रियते॥

सेऽद्युस्थस्य ॥ ३७ ॥ इसुसो रेफस्याऽद्युस्थस्य से सिर्भवति कुप्वोः परतः । सर्पिष्कुड । सर्पिष्पानं । धनुष्खड । स इति किं ? आस्तां सर्पिःपिब क्षीरं। अद्युस्थस्येति किं?सत्सर्पिःकुडे ।

कृकमिकंसकुम्भकुशाकर्णीपात्रेऽतोऽज्ञे ॥३८॥ कृकम्यादिष्वतः परस्याज्ञेः रेफस्य से अद्युस्थस्य सिर्भवति । अयस्कार । अयस्कृत्। यशस्कामः । अयस्कंसः। अयस्कुभः। अयस्कुशा । अयस्कर्णी । पयस्पात्रं। अत इति किं ? गी कारः। धू कारः । अज्ञेरिति किं? स्वः कृत्। प्रात कारः। अद्युस्थस्येति किं ? सुपयस्कारः ।

शिरोऽधसोः पदे ॥ ३९ ॥अनयोरद्युस्थस्य रेफस्य पदे परतः से सिर्भवति । शिरस्पद । अधस्पद । स इति किं ? शिरस पद ।

*कस्कादिषु ॥४०॥ एषु वर्तमानस्य रेफस्य सिर्भवति कुप्वोः परत । कस्क। । कौतस्कुतः। भास्करः । अयस्पिंड । इत्यादि ।

*किणोस्ससे ष ॥ ४१ ॥ कवर्गेण्भ्या परस्य सकारस्य सेश्च षो भवति । इत्यधिकारो

शेषः । वक्ष्यति–स्यादेशयोः । वाक्षु । मुनिषु । भिषेव । सर्पिष्काम्यति । क्विणोगिति किं ? यास्यति ।

नुमशरः ॥ ४२ ॥ क्विण्भ्यां परो यो नुम् शर् च तस्मात्सम्योः षो भवति । सर्पींषि । धनूंषि । सर्पिःषु । धनुःषु ॥

स्यादेशयोः ॥ ४३ ॥ ताभ्यां स्यसकारस्य आदेशसकारस्य च षादेशो भवति । एषु । एषा । सुष्वाप । साधुषु । कर्तृषु । दिक्षु ।

शास्वसुवसां ॥ ४४ ॥ क्विण्भ्यां परस्य एषां सकारस्य षो भवति । शिष्टः । शिष्टवान् । उष्यते । जक्षतुः ॥

षणि चाण्णिस्तोरेवास्वित्स्वत्सहः॥४५॥ षणि षत्वभूते सनि परे चात्परस्य सकारस्य षादेशो भवति ण्यंतानां स्तौतेश्च स्विदि स्वदि सहो विहाय । सिषेवयिषति । सुष्वापयिषति । तुष्टूषति । नियमोऽयं–णिस्तोरेव षणि षत्वं नान्यस्य । सुसूषति । सिसिक्षति । एवकारः इष्टनियमार्थः । णिस्तोः षण्येवेति माभूत् । असीषिवत् । तुष्टाव । षणीति किं ? सिषेव । षत्वनिर्देशः किं ? सिषासति । सुषुप्साति । नकारग्रहणं किं ! व्यातिसुषुपिषे । चादिति किं ? प्रतीषिषति । आस्विस्वत्सह इति किं ? सिस्वेदयिषति । सिस्वादयिषति । सिसाहयिषति ।

*सञ्जेर्वा ॥ ४६ ॥ संजर्ण्यतस्य षणि चात्परस्य षो वा स्यात् । सिषंजयिषति । सिसंजयिषति ।

गेः सुवसुसोस्तुस्तुभोऽव्यऽपि ॥ ४७॥ गेरिण्णंतात्परेषां एषां सकारस्याटि मव्यऽमत्यपि षो भवति । परिषुणोति । विषुणोति । अभिषुणोति । पर्यषुणोत् । निषुवति । विषुवति । परिषुवति । न्यषुवत् । विष्यति । निष्यति । अभिष्यति । व्यष्यत् । नमिनायमभिष्टौमि । अभ्यष्टौत् । निष्टौति । विष्टौति । परिष्टौति । अभिष्टोभते । निष्टोभते । अभिष्टोभते । अभ्यष्टोभत । गेरिति किं ? दधि सुनोति ।

*स्थासेनिसेधसिचसंजस्वंजोऽड् चेऽस्य च ॥ ४८ ॥ स्थादीनां गेः परेषामटि चे च सत्यपि अस्य च चस्य षो भवति । अनुष्ठास्यति । निष्ठास्यति । विष्ठास्यति । अभिष्ठास्यति । परिष्ठास्यति । अन्वष्ठात् । अनुतष्ठौ । अभिषेणयति । निषेणयति । परिषेणयति । अभ्यषेणयत् । अभिषिषेणयिषति । निषेधति । विषेधति । अभिषेधति । परिषेधति । न्यषेधत् । निषिषेध । विषिंचति । निषिंचति । परिषिंचति । अभिषिंचति । व्यषिंचत् । विषिषिक्षति । विषजति । निषजति । परिषजति । अभिषजति । व्यषजत् । विषषंज । परिष्वजते । निष्वजते । विष्वजते । परिषिष्वंक्षते ।

सदोऽप्रतेः ॥ ४९ ॥ अप्रतेर्गेः परस्य सदेः षो भवति । निषीदति । विषीदति । परिषीदति । न्यषीदत् । निषीषद्यते । निषसाद । अभिषिषत्सति । अप्रतेरिति किं ? प्रतिसीदति ।

स्तम्भेः ॥ ५० ॥ गेःपरस्य स्तंभेः षो भवति । निष्टभ्नाति । प्रतिष्टभ्नाति । परिष्टभ्नाति । विष्टभ्नाति।प्रत्यष्टभ्नात्।प्रतितष्टंभ।प्रतिविष्टम्भते।

* आश्रयाऽविदूरोर्स्ववाघ ॥ ५१ ॥ अवात्परस्य स्तंभेः षत्वादेशो भवति आश्रये–अविदूरे ऊर्जे चार्थे । अवष्टभ्यास्ते । अवष्टब्धे सेने । अहो सुभटस्यावष्टंभः । पुन्विति किं ? अवस्तब्धो वृषलः । चक्रस्तादुपस्तम्भः ।

वेश्च स्वनोऽशने ॥ ५२ ॥ वेरवाच्चोत्तरस्य स्वनेः षो भवति–अशनेऽर्थे । विष्वणति । व्यष्वणत् । विषष्वाण । अवष्वणत् । अवषष्वणे । अशन इति किं ? विस्वनति मृदंगः ।

* परिनिवेः सेव ॥ ५३ ॥ एभ्यः सेवतेः

अटि चे च सत्यसत्यपि षो भवति । परिषेवते । पर्य्यषेवत । परिषिषेविषते । निषेवते । विषेवत । न्यषेवत् । व्यषेवत् ।

* सितसयस्य ॥ ५४ ॥ परिनिविभ्य सित सययो षो भवति । परिषितः । निषित । विषितः । परिषयः । निषय । विषयः ।

सिवुसहसुट्स्तुस्वजः ॥ ५५ ॥ तेभ्यः सिवादीनां षो भवति । परिषीव्यति । निषीव्यति । विषीव्यति । परिषहते । निषहते । विषहते।परिष्कर्ता।नेमिमाथ परिष्टौति।परिष्वजते।

वाऽटि ॥ ५६ ॥ तेभ्य सिवादीना अटि षो वा स्यात् । पर्य्यषीव्यत् । पर्यसीव्यत् । न्यसीव्यत् । न्यषीव्यत्।व्यषीव्यत् । व्यसीव्यत् । पर्य्यषहत । पर्यसहत । न्यषहत । न्यसहत । व्यषहत । व्यसहत । पर्य्यष्करोत् । पर्य्यस्करोत् । न्यष्करोत् । न्यस्करोत् । व्यष्करोत् । व्यस्करोत् । पर्य्यष्टौत् । पर्यस्तौत् । न्यष्टौत् । न्यस्तौत् । व्यष्टौत् । व्यस्तौत् । पर्यष्वजत् । पर्यस्वजत् । न्यष्वजत । न्यस्वजत् । व्यष्वजत् । व्यस्वजत् ।

* स्यदोऽभ्यनोश्चाऽजीवे ॥ ५७ ॥ अभ्यनुभ्या तेभ्यश्चोत्तरस्य स्यदे षो वा स्यादजीवेऽर्थे। अभिस्यदते, अभिष्यदते तैलं । अनुष्यदते, अनुस्यदते । परिस्यदते, परिष्यदते । निष्यदते, निस्यदते । विष्यदते, विस्यदते । अजीव इति किं ? अभिस्यदते मत्स्यः ।

वेः स्कंदोऽक्ते ॥ ५८ ॥ वे परस्य स्कदेर्वा षो भवति–अक्तसज्ञके परतः । विष्कत्ता । विस्कत्ता । अक्त इति किं?विस्कन्नः ।विस्कन्नवान् ।

परे ॥५९॥ परे परस्य स्कदेर्वा षो भवति। परिष्कत्ता, परिस्कत्ता । पृथक्सूत्रात् क्तेऽपि स्यात् । परिष्कण्ण , परिस्कन्नः । परिष्कण्णवान्, परिस्कन्नवान् ।

स्फुरिस्फुल्योर्निर्नेः ॥ ६० ॥ निर्निभ्या परयो स्फुरिस्फुल्यो षो वा स्यात् । नि ष्फुरति, निःस्फुरति । निष्फुरति, निस्फुरति । नि ष्फुलति । नि स्फुलति । निष्फुलति,निस्फुलति ।

वे ॥६१॥ वेरुत्तरयोस्तयो षो वा स्यात् । विष्फुरति । विस्फुरति । विष्फुलति।विस्फुलति ।

*स्कभ्नः षः ॥ ६२ ॥ वे परस्य स्कभ्नाते षो भवति । विष्कभ्नाति । विष्कभिता । विष्कभक । पुन षो नित्यार्थः ।

इणः षीध्वलुङ्लिटां धो ढः ॥ ६३ ॥ इण परेषा एषा धकारस्य ढो भवति । चेषीढ्वं । च्योषीढ्व । अचेढ्व।अच्योढ्व।चकृढ्वे । ववृढ्वे। इण इति किं ? पक्षीध्व । एषामिति किं? स्तुध्वे ।

* वेण्जेः ॥ ६४ ॥ इणः पराभ्या इट्जिभ्यां परेषा तेषा धकारस्य ढो वा स्यात् । लविषीढ्व । लविषीध्व । अलविढ्व । अलविध्व। लुलुविढ्वे । लुलुविध्वे । ग्राहिषीढ्वं । ग्राहिषीध्व ।

सेऽगुलेः सगे ॥ ६५ ॥ अगुले परस्य सगे सकारस्य से षो भवति । अगुलिषगः।से इति किं ? अगुलेः संग ।

भीरोः स्थान ॥ ६६ ॥ भीरोः परस्य स्थानस्य से षो भवति । भीरुष्ठान ।

ज्योतिरायुषः स्तोमः ॥ ६७ ॥ आभ्या स्तोमस्य षो भवति से । ज्योतिष्टोम । आयुष्टोम ।

*स्तुत्स्ताग्ने ॥६८॥ अग्नेःपरयोःस्तुत्स्तोमयोः से षो भवति । अग्निष्टुत् । अग्निष्टोम ।

मातृपितु स्वसृ ॥ ६९ ॥ आभ्या स्वसृ सकारस्य षो भवति से । मातृष्वसा।पितृष्वसा ।

वाऽनुपि ॥ ७० ॥ अनुपि से ताभ्या स्वसु षो वा स्यात् । मातुः ष्वसा । मातुः स्वसा । पितुः ष्वसा । पितु स्वसा ।

* प्रादुर्गेयच्यस्तेः ॥ ७१ ॥ प्रादुःशब्दात्

गिम्यश्च परस्यास्तेः षो भवति यकारादावचादौ च परे । प्रादुष्यात् । प्रादुः षन्ति । निष्यात् । निषति । अभिष्यात् । अभिषति । प्रादुर्गेरिति किं ? दधि स्यात् । यऽचीति किं ? अनुस्व । अनुस्मः ।

*निर्दुःसुवेः समसूतिस्वपोऽत्र ॥ ७२ ॥ निरादिभ्य परयोः समसूत्योः स्वपेश्चावकारस्य षो भवति । निःषमः । दुःषमः । सुषम । विषम । निःषूतिः । दुःषूतिः । सुषूति । विषूति । निःषुप्तः । दुःषुप्तः । सुषुप्तः । विषुप्त । अव इति किं ? दुःस्वप्नः ।

विकुशमीपरेः स्थल ॥ ७३ ॥ एभ्यः स्थलस्य षो भवति । विष्ठलं । कुष्ठल । शमीष्ठल । परिष्ठल ।

कपेर्गोत्रे ॥ ७४ ॥ कपेः स्थलस्य षो भवति गोत्रेऽर्थे । कपिष्ठल । गोत्रे इति किं ? कपिस्थल ।

गोंबांवभूमिसव्यापद्वित्रिकुशेकुशकङ्गुमञ्जिपुञ्जिपरमेबर्हिर्दिव्यग्नेः स्थः ॥ ७५ ॥ एभ्यः स्थस्य षो भवति । गोष्ठ । अम्बष्ठ । आम्बष्ठ । भूमिष्ठः । सव्यष्ठः । अपष्ठः । द्विष्ठः । त्रिष्ठः । कुष्ठः । शेकुष्ठः । शङ्कुष्ठः । अङ्गुष्ठ । मञ्जिष्ठः । पुञ्जिष्ठ । परमेष्ठ । बर्हिष्ठः । दिविष्ठः । अग्निष्ठ ।

*प्रष्ठोऽग्रगत् ॥ ७६ ॥ प्रात्परस्य स्थस्य षो निपात्यते अग्रे गत्यर्थे । प्रष्ठो गौः । प्रस्थोऽन्य ।

सुषामादिषु ॥७७॥ एषु वर्तमानस्य सकारस्य षो भवति । सुषामा । विषामा । निःषामा । निषेध । सुषधि । परमेष्ठी । सुष्टिक्वित्यादि ।

*भ्रात्सुपस्त्ये ॥ ७८ ॥ भ्रात्परस्य सकारस्य षत्व स्यात् सुपतात् विहिते तकारादौ त्ये परत । सर्पिष्टा । सर्पिष्ट्व । सर्पिष्टर । वपुष्टम । चतुष्टय । भ्रादिति किं ? गीस्तरा । धूस्तरा । सुप इति किं ? भिन्धुस्तरा । छिन्धुस्तरा । तादिग्रहण किं ? सर्पिस्सात् । त्य इति किं ? सर्पिस्तरति ।

निसोऽनासेवायां तपे ॥ ७९ ॥ निसः षो भवति—अनासेवायामर्थे तपतौ परे । निष्टप्त हिरण्य । निष्टप्ता अरातय । अनासेवायामिति किं ? निस्तपति सुवर्णो सुवर्णकारः ।

*निनद्याःस्नातेर्दाक्ष्ये ॥ ८० ॥ निनदीभ्या स्नातेः षो भवति दाक्ष्येऽर्थे । निष्णः दाने । नदीष्णः प्रतरणे । कुशल इत्यर्थः ।

*प्रतेः स्नात सूत्रे ॥८१॥ प्रतेःपरस्य स्नातेः षो भवति सूत्रेऽर्थे । प्रतिष्णात सूत्र शुद्धमित्यर्थ । प्रतिस्नातमन्यत् ।

—स्नान सौ ॥ ८२ ॥ प्रतेः स्नानस्य षो भवति सूत्रे सौ । प्रतिष्णान सूत्रमित्यर्थः । साविति किं ? प्रतिस्नान ।

*वर्णेऽभिनिष्टान ॥ ८३ ॥ वर्णे सौ अभिनिभ्या स्तानस्य षो निपात्य । अभिनिष्टानो विसर्ग । अभिनिस्तानोऽन्यत्र ।

*विष्टारश्छदसि ॥८४॥ वे परस्य स्तारस्य षो निपात्यते छदोऽर्थे सौ । विष्टार पंक्ति छद । विस्तारोऽन्यत्र ।

*वृक्षासने विष्टर ॥८५॥ वेः परस्य तरस्य षो निपात्यते वृक्षासनयोरर्थयो । विष्टरो वृक्ष । विष्टरमासन । विस्तरोऽन्य ।

*गवियुधि स्थिर ॥८६॥ गवि युधि इत्येताभ्या स्थिरस्य षो भवति सौ । गविष्ठिर । युधिष्ठिर ।

*पत्यऽगः ॥८७॥ अगकारांतात्परस्य सकारस्य षो भवत्येकारे परतः सौ । वारिषेण । श्रीषेण । हरिषेण । एतीति किं ? हरिसिंह । अग इति किं ? विष्वक्सेनः । इण इति किं ? धर्मसेनाचार्यः

+भाद्वा ॥ ८८ ॥ भवाचिनः शब्दात् सकारस्य षो वा भवति एकारे सौ । भरणिषेणः । भरणिसेन । रोहिणिषेणः । रोहिणिसेनः । अग इति किं ? अध्वयुक्सेनः ॥

* पदान्त ॥८९॥ पदान्तस्य सकारस्य षो न स्यात् । दधि सिंचति । मधु सुनोति ।

* वहोः ॥९०॥ वहोस्त्यास्त्स्य षो न स्यात् । वहुसेक् ।

सात् ॥ ९१ ॥ सातः सस्य षो न स्यात् । मुनिसात् । अग्निसात् । दधिसात् । मधुसात् ।

सिचो यङि ॥ ९२ ॥ सिचेः सस्य षो न भवति याङि परतः । सेसिच्यते । अभिसेसिच्यते ।

सेधो गतौ ॥ ९३ ॥ सेधतेर्गत्यर्थस्य षो न स्यात् । प्रतिसेध गाः । अभिसेध गाः । गताविति किं ? प्रतिषेधति पापं मुनिः ।

निस्तब्धप्रतिस्तब्धौ ॥ ९४ ॥ निप्रतिभ्यां स्तभेः षत्वाभावो निपात्यते । निस्तब्धः । प्रतिस्तब्धः । ॥

सोढः ॥९५॥ सोढ्भूतस्य सहेःषो न स्यात् । विसोढा । परिसोढुं । परिसोढव्यं । सोढ्भूतस्येति किं ? निषहते । विषहते ।

* स्तंभुसिवुसहप्कचि ॥ ९६ ॥ एषां कचि परतः षत्वं नास्ति । प्रत्यतस्तंभत् । पर्यसीषिवत् । व्यसीषहत् ।

सुञः सन्स्ये ॥ ९७ ॥ सुञः सनि स्ये च परतः षकारादेशो न स्यात् । सुसूषतीति सुसूः । अभिसोष्यति ।

सस्वंजश्वालिलिटि ॥९८॥ सहिस्वंज्योश्चात्परयोर्लिटि परतः षो न स्यात् । निषसाद । अभिषस्वंजे । अभिषस्वजे ॥

* षो नो णोऽभिन्ने ॥ ९९ ॥ षकाररेफाभ्यां परस्य नकारस्य णत्वं भवत्यभिन्नपदे चेत्तौ निमित्तनिमित्तिनौ भवतः । कुष्णाति । पुष्णाति । निष्केण । मूर्खेण । वर्गेण । दीर्घेण । पुष्येण । रेफेण । गिरिणा । मेरुणा । वर्षेण । भर्वेण । गर्भेण । अभिन्न इति किं ? मुनिर्नयति स्वर्गं ॥

* प्राक्पदस्थान् खौ ॥ १०० ॥ पूर्वपदस्थात्परस्य नकारस्य णकारादेशो भवति खौ । पुष्पणंदी । वीरणंदी । धर्मणंदी । श्रीणंदी स्त्री । खाविति किं ? दीर्घनासिकः ।

* अगः ॥ १०१ ॥ गकारांतान्नकारस्य णो न भवति । ऋगयनं ।

*कोटराभ्यो वनं ॥ १०२ ॥ कोटरादिभ्यः परं वनं विनियम्यते खौ । कोटरावणं । मिश्रकावणं । सिध्रकावणं । सारिकावणं । पुरगावणं । एभ्य इति किं ? शतपत्रवनं । मनोहरवनं ।

मोंग्रऽस्वनिःशरेक्षुप्लक्षपीयू

चतुस्त्रेर्वयसि हायनः ॥ १०८ ॥ चतुर् त्रिभ्यां हायनस्य नस्य णो भवति वयसि गम्यमाने। चतुर्हायणो वत्सः । त्रिहायणोऽश्वः । चतुस्त्रेरिति किं?लक्षहायन-पक्षी।वयसीति किं?चतुर्हायेना शाला।

वाह्याद्वाहनं ॥ १०९ ॥ वाह्यात्परस्य वाहननकारस्य णो भवति।इक्षुवाहणं।शरवाहणं। वाह्यादिति किं ? सुरवाहनं ।

पानं देशेऽसेः ॥ ११० ॥ देशे गम्यमाने पानस्य णकारादेशो भवति-असेः । क्षीरपाणाः आंध्राः । सौवीरपाणाः द्राविडाः । सुरापाणाः प्राच्याः । देशे इति किं?दाक्षिपानं । असेरिति किं ? सर्पिष्पानाः ।

वा भावकरणे ॥ १११ ॥ भावे करणे च वर्तमानस्य पाननस्य णो वा स्यात् । सौवीरपाणं, सौवीरपानं । क्षीरपाणं, क्षीरपानं, वर्तते । करणे—क्षीरपाणः, क्षीरपानः । वारिपाणः, वारिपानः कंसः। भावकरण इति किं ? क्षीरपानो घोषः ।

गिरिनद्यादीनां ॥ ११२ ॥ एषां वा णो भवति । गिरिणदी । गिरिनदी । चक्राणितंबा। चक्रानितंबा । मापोणः । मापोनः ।

मृदंतनुम्सुपि ॥११३॥मृदते नुमि सुपि च यो नकारस्तस्य वा णो भवति। माषवापिणौ,माषवापिनौ । व्रीहिवापिणौ, व्रीहिवापिनौ । माषवापाणि । माषवापानि । व्रीहिवापाणि । व्रीहिवापानि । माषवापेण, माषवापेन । प्राक्पदस्थात्स्यादिति किं ? कूपवारिणा ।

एकाज्यौ णः ॥ ११४ ॥ एकाचि धौ स्थितस्य मृदंतनुम्सुब्नकारस्य णो भवति । ब्रह्महणौ । वृत्रहणौ । क्षीरपाणि । सुरापाणि । सुरापेण । क्षीरपेण ।

सकौ ॥ ११५ ॥ सकवर्गे धौ स्थितस्य मृदंतनुम्सुब्नकारस्य णो भवति । मोक्षकामिणौ । वस्त्रयुगिणौ।स्वर्गकामाणि । करयुगाणि । गुरुमुखेण । करयुगेण ।

ग्यंऽतरोऽदुरो विकृतेः ॥ ११६ ॥ दुर्वर्जिताद्गेरंतःशब्दाच्च विकृतेर्नकारस्य णो भवति। पार्श्वजिनं प्रणमामि । प्रणयति । परिणयति । अंतर्णयति । प्रणामकः । परिणायकः । ग्यंतर इति किं ? साधुर्नयति स्वर्गं । अदुर इति किं? दुर्नयः । विकृतेरिति किं? प्रनृत्यति। प्रनर्तकः ।

शः ॥ ११७ ॥ गेरदुरोऽतःशब्दाच्च शकारांतस्य धोर्नस्य णो भवति । प्रणश्यति । परिणश्यति । प्रणाशकः । श इति किं ? प्रनष्टः । प्रनंक्ष्यति ।

हिम्योर्नुनोः ॥ ११८॥ गेरदुरोऽतःशब्दाच्च हिमीभ्यां नुना इत्येतयोर्णो भवति। प्रहिणोति। प्रहिणुतः । प्रमीणाति । प्रमीणीतः ।

आनेः ॥ ११९ ॥ गेः परस्यानेर्णो भवति। प्रयाणि । प्रापयाणि । अंतर्याणि । प्रयाणि ।

नेर्गदनदपतपद्घुमास्यतियातिवातिद्रातिप्सातिवपतिवहोशम्युचिन्देग्धौ ॥ १२० ॥ गेः परस्य नेर्णो भवति गदादिषु परतः । प्रणिगदति । प्रणिगदिता । परिणिगदति । परिणिगदिता । प्रणिनदति । वीरनाथं प्रणिपतामि । प्रणिपद्यते । प्रणिपत्ता। प्रणिददाति । प्रणिद्यति । प्रणिश्यति । प्रणिदधाति । प्रणिमयते। प्रणिमिमीते । प्रणिमापयते । प्रणिमाता । प्रणिष्यति । परिणिष्यति । प्रणिहंति । प्रणियाति।प्रणिवाति। प्रणिद्राति । प्रणिप्साति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि । अंतर्णिगदति ।

शेषे वाऽपांतेऽकखादौ ॥ १२१ ॥ शेषे गदादिवर्जिते धौ अपकारांते अकखकारखकारादौ

* पदान्न ॥८९॥ पदात्परस्य सकारस्य षो न स्यात् । दधि सिंचति । मधु सुनोति ।

* बहोः ॥९०॥ बहोस्त्यात्सस्य षो न स्यात् । बहुसेक् ।

सात् ॥ ९१ ॥ सातः सस्य षो न स्यात् । मुनिसात् । अग्निसात् । दधिसात् । मधुसात् ।

सिचो यङि ॥ ९२ ॥ सिचेः सस्य षो न भवति यङि परतः । सेसिच्यते । अभिसेसिच्यते ।

सेधो गतौ ॥ ९३ ॥ सेधतेर्गत्यर्थस्य षो न स्यात् । प्रतिसेध गाः । अभिसेध गाः । गताविति किं ? प्रतिषेधति पापं मुनिः ।

निस्तब्धप्रतिस्तब्धौ ॥ ९४ ॥ निप्रतिभ्यां स्तभेः षत्वाभावो निपात्यते । निस्तब्धः । प्रतिस्तब्धः ॥

सोढ ॥९५॥ सोढ्भूतस्य सहेः षो न स्यात् । विसोढा । परिसोढुं । परिसोढव्यं । सोढ्भूतस्येति किं ? निषहते । विषहते ।

* स्तम्भुसिवुसहप्काचि ॥ ९६ ॥ एषां चङि परतः षत्वं नास्ति । प्रत्यतस्तभत् । पर्यसीषिवत् । व्यसीषहत् ।

सुञः सन्स्ये ॥ ९७ ॥ सुञः सनि स्ये च परतः षकारादेशो न स्यात् । सुसूषतीति सुसू । अभिसोष्यति ।

सस्वजश्चालिलिटि ॥९८॥ सहिस्वञ्ज्यो चात्परयोर्लिटि परतः षो न स्यात् । निषसाद । अभिषस्वजे । अभिषस्वजे ॥

* षो नो णोऽभिन्ने ॥ ९९ ॥ षकाररेफाभ्यां परस्य नकारस्य णत्वं भवत्यभिन्नपदे चेत्तौ निमित्तनिमित्तिनौ भवतः । कुष्णाति । पुष्णाति । निष्केण । मूर्खेण । वर्गेण । दीर्घेण । पुष्येण । रेफेण । गिरिणा । मेरुणा । वर्षेणा । गर्वेण । गर्मेण । अभिन्न इति किं ? मुनिर्नयति स्वर्गं ॥

* प्राक्पदस्थात् खौ ॥ १०० ॥ पूर्वपदस्थात्परस्य नकारस्य णकारादेशो भवति खौ । पुष्पणदी । वीरणदी । धर्मणदी । श्रीणदी स्त्री । खाविति किं ? दीर्घनासिकः ।

* अगः ॥ १०१ ॥ गकारान्तान्नकारस्य णो न भवति । ऋगयन ।

* कोटराभ्यो वन ॥ १०२ ॥ कोटरादिभ्यः परं वनं विनियम्यते खौ । कोटरावण । मिश्रकावण । सिधूकावण । सारिकावण । पुरगावण । एभ्य इति किं ? शतपत्रवन । मनोहरवन ।

प्रनिरन्तर्निःशरेक्षुप्लक्षपीयूक्षाकार्श्याम्र खदिरात् ॥ १०३ ॥ एभ्यो वननकारस्य णो भवति । प्रवण । अग्रेवण । अन्तर्वण । निर्वण । शरवण । इक्षुवण । प्लक्षवणं । पीयूक्षावण । कार्श्यवण । आम्रवण । खदिरवण ॥

* द्वित्र्यज्भ्यो वृक्षौषधिभ्योऽनिरीकादिभ्यो वा ॥ १०४ ॥ द्वित्र्यज्भ्यो वृक्षौषधिवाचिभ्य निरीकादिरहितेभ्यो वनस्य नस्य णो वा स्यात् । दारुवण, दारुवन । बदरीवण, बदरीवन । दूर्वावण । दूर्वावन । व्रीहिवण, व्रीहिवन । कोद्रववण, कोद्रववन । द्वित्र्यज्भ्य इति किं ? देवदारुवन । भद्रदारुवन । राजमाषवन । वृक्षौषधिभ्यः इति किं ? पितृवन । अनिरीकादिभ्य इति किं ? इरीकावन कुबेरवन । तिमिरवन । समीरवन ।

+ ग्रामाग्रान्नीः ॥ १०५ ॥ आभ्यां नीनकारस्य णो भवति । ग्रामणीः । अग्रणीः ।

* नसः ॥ १०६ ॥ गे परो नसो णकारादेशो भवति । प्रगता नासिका अस्य प्रणसं मुखं । निर्णस ।

अतोऽन्हः ॥ १०७ ॥ अकारान्तात्परस्याह्नस्य णत्वं भवति । पूर्वाह्ण । अपराह्णः । अत इति किं ? निरह्न । दुरन्हः ।

चतुस्त्रेर्वयसि हायन ॥ १०८ ॥ चतुर् त्रिभ्या हायनस्य नस्य णो भवति वयसि गम्यमाने। चतुर्हायणो वत्स । त्रिहायणोऽश्वः। चतुस्त्रेरिति किं'लक्षहायन पक्षी।वयसीति किं'चतुर्हायना शाला।

वाह्याद्वाहन ॥ १०९ ॥ वाह्यात्परस्य वाहननकारस्य णो भवति। इक्षुवाहण। शरवाहण। वाह्यादिति किं ' सुरवाहन।

पान देशेऽसेः ॥ ११० ॥ देशे गम्यमाने पानस्य णकारादेशो भवति असेः। क्षीरपाणा आभ्रा । सौवीरपाणाः द्राविडा । सुरापाणाः प्राच्या । देशे इति किं ' दाक्षिपान । असेरिति किं ' सर्पिष्पाना ।

वा भावकरणे ॥ १११ ॥ भावे करणे च वर्तमानस्य पाननस्य णो वा स्यात्। सौवीरपाण, सौवीरपान। क्षीरपाण, क्षीरपान, वर्त्तते। करणे—क्षीरपाणः, क्षीरपानः। वारिपाण , वारिपान कंस। भावकरण इति किं ' क्षीरपानो घोषः।

गिरिनद्यादीनां ॥ ११२ ॥ एषा वा णो भवति । गिरिणदी। गिरिनदी । चक्रणितम्बा। चक्रनितम्बा । माषोणः। माषोनः।

मृदतनुमुसुपि ॥११३॥मृदते नुमि सुपि च यो नकारस्तस्य वा णो भवति। माषवापिणौ,माषवापिनौ। व्रीहिवापिणौ, व्रीहिवापिनौ। माषवापाणि । माषवापानि । व्रीहिवापाणि । व्रीहिवापानि । माषवापेण, माषवापेन। प्राक्पदस्थात्पूदिति किं ' कूपवारिणा।

एकाज्धौ ण ॥ ११४ ॥ एकाचि धौ स्थितस्य मृदतनुमुसुब्नकारस्य णो भवति । ब्रह्महणौ। वृत्रहणौ। क्षीरपाणि। सुरापाणि। सुरापेण। क्षीरपेण।

सकौ ॥ ११५ ॥ सकवर्गे धौ स्थितस्य मृदतनुमुसुब्नकारस्य णो भवति । मोक्षकामिणौ । वस्त्रयुगिणौ।स्वर्गकामाणि । करयुगाणि। गुरुसुखेण । करयुगेण ।

ण्यऽतरोऽदुरो विकृतेः ॥ ११६ ॥ दुर्वर्जिताद्रेरत शब्दाच्च विकृतेर्नकारस्य णो भवति। पार्श्वजिनं प्रणमामि । प्रणयति । परिणयति । अंतर्णयति । प्रणामकः । परिणायक । ण्यतर इति किं ' साधुर्नयति स्वर्गं । अदुर इति किं' दुर्नय । विकृतेरिति किं ' प्रनृत्यति। प्रनर्त्तकः।

शः ॥ ११७ ॥ गेरदुरोऽन्तःशब्दाच्च शकारान्तस्य धोर्नस्य णो भवति। प्रणश्यति। परिणश्यति । प्रणाशकः । श इति किं ' प्रनष्टः। प्रनङ्क्ष्यति।

हिम्योर्नुनोः ॥ ११८॥ गेरदुरोऽन्तःशब्दाच्च हिमीभ्या नुना इत्येतयोर्णो भवति। प्रहिणोति। प्रहिणुतः । प्रमीणाति । प्रमीणीतः ।

आनेः ॥ ११९ ॥ गेः परस्यानेर्णो भवति। प्रयाणि । प्रापयाणि । अतर्याणि । प्रवाणि ।

नेर्गदनद्पतपद्घुमास्यतियातिवातिद्रातिप्सातिवपतिवहोशमुचिच्देग्धौ ॥ १२० ॥ गे परस्य नेर्णो भवति गदादिषु परतः। प्रणिगदति । प्रणिगदिता । परिणिगदति । परिणिगदिता । प्रणिनदति । वीरनाथ प्रणिपतामि। प्रणिपद्यते । प्रणिपत्ता। प्रणिददाति । प्रणिधत्ते। प्रणिधयति । प्रणिदधाति । प्रणिमयत। प्रणिमिमीते । प्रणिमास्यते । प्रणिमाता । प्रणिष्यति । परिणिष्यति । प्रणियाति । प्रणियाति।प्रणिवाति। प्रणिद्राति । प्रणिप्साति । प्रणिवपति । प्रणिवहति । प्रणिशाम्यति । प्रणिचिनोति । प्रणिदेग्धि । अतर्णिगदति ।

शेषे वाऽपातेऽकखादौ ॥ १२१ ॥ शेषे गदादिवर्जिते धौ अपवर्जिते अककारखकारादौ

नेर्वा णो भवति । प्रणिपचति । प्रनिपचति । परिणिभिनत्ति । परिनिभिनत्ति । अपात इति किं ? प्रनिपिनष्टि । अरखादाविति किं ? प्रनिकरोति । प्रनिखनति । अतादिग्रहणमुपदेशार्थं । प्रनिपेक्ष्यति । प्रनिचकार । प्रनिचखाद ।

इतोऽनितेः ॥ १२२॥ इकारान्ताद्धे परस्यानितेर्णो वा स्यात् । पर्यणिति । पर्यनिति । इत इति किं ? प्राणिति ।

अते च ॥ १२३ ॥ गे परस्यानितेर्णो भवत्यतेऽन्ते च । पराणिते । हे प्राण ।

द्वौ ॥ १२४ ॥ गेरनितेर्द्वौ नकारौ विनियम्येते । प्राणिणिषति। पराणिणिषति । प्राणिसात् । पराणिणत् । द्वाविति किं ? प्राणिणिनिषत्।

हन ॥ १२५ ॥ गे परस्य हतेर्णो भवति। प्रहण्यते । परिहण्यते । प्रहणन । परिहणन ।

वा म्वो ॥ १२६ ॥ गेर्हतेर्णो वा स्यात् मकारवकारयोः परतः । प्रहण्मः । प्रहण्म । प्रहन्म । प्रहन्म ।

कृत्यऽचोऽभाभूपून्कम्गमप्याय्वेपोऽपः ॥ १२७ ॥ अपकारान्ताद्गे पराद्धादिवर्जिताद्धो परस्य कृत्स्थनकारस्याच परस्य णो भवति । प्रयाण । परियाणीयं । प्रवपण । प्रहीण । प्रहीयमाण । कृतीति किं ? प्रयाति । अच इति किं ? प्रभुग्न । प्रभुग्नवान् । अभादेरिति किं ? प्रभान । परिभान । परिभवन । प्रभवनं । प्रपवन । प्रक्रमनं । प्रगमन । प्रप्यायन । प्रवेपन । अप इति किं ? निष्पान । दुष्पानं ।

नुमीऽज्ञादेरेः ॥ १२८ ॥ गे परस्य धो इजादेरेव नुमि सति कृन्नकारस्य णो भवति । प्रेङ्खण । परेङ्खण । प्रेङ्गणं । अतारिङ्खण । नुमीति किं ? नुम्यसति न नियमः । प्रवहण । इजादेरिति किं ? प्रमङ्गन । प्रमंगनं । इष्टनियमार्थमेवकारः। नुम्येवेजादेरिति मा भूत् प्रोहण ।

णिहलिजुढो वा ॥ १२९॥ ण्यन्तात् हलः परात् इजुढश्च धोः कृन्नकारस्य गे परस्य वा णो भवति । प्रयापण । प्रयापन । प्रयाप्यमाण । प्रयाप्यमान । प्रकोपणं । प्रकोपन । प्रमोहण । प्रमोहन । हल्ग्रहणं किं ? प्रेहण । परोहण । इजुढ इति किं ? प्रहृण । अभादेरिति किं ? प्रभावना प्रभावना । प्रयावना । प्रकामना ।

निसनिक्षनिंदां ॥ १३० ॥ गेरदुरोऽतश्च परेषां निसादीनां कृति परे णो वा भवति । प्रणिंसन । प्रनिंसन । प्रणिक्षन, प्रनिक्षन । प्रणिंदन, प्रनिंदन ।

निर्विण्ण ॥ १३१ ॥ निस्पूर्वाद्विद परस्य कृन्नकारस्य णो निपात्य । *निर्विण्णः मामाजीत्।*

नाऽन्तरोऽयनघ्नो देशे ॥ १३२ ॥ अन्तर शब्दात्परस्य अयनस्य हतेश्च णो न स्यात् देशेऽर्थे । अन्तरयन । अन्तर्हनः देशः । देश इति किं ? अन्तरयण ।

श्चुल्टुस्तौ मध्ये ॥ १३३ ॥ शकारे चवर्गे लकारे टवर्गे सकारे तवर्गे च निमित्तनिमित्तिनोर्मध्ये सति णत्व न स्यात् । रशना । निरशन । अर्चना । मूर्छना । उपार्जनं । धृपलेन । पृष्टेन । हढेन । मर्द्दन । दार्ढ्यन । रसेन । वर्धन । तीर्थेन । प्रमर्द्दनं । प्रवर्द्धन ।

पदेऽनाड्यघ्नति ॥ १३४ ॥ आङ्हीने पदे मध्ये सति णो नाम्न्यघ्नति । प्रावनद्ध । मापकुम्भवापेन । चतुरङ्गयोगेन । अनाङीति किं पर्याणद्ध । निर्णीत । अघ्नतीति किं ? आर्द्रगोमयेण।

घि घ्न ॥ १३५॥ घेर्मध्ये सति हन्तेर्णो न स्यात् । प्रघ्नति । प्रघ्नः । घीति किं ? प्रहणः ।

क्षुभ्नाद्यतेषु ॥ १३६ ॥ क्षुभ्नादिषु पदान्ते च नकारस्य णो न स्यात् । क्षुभ्नाति । क्षुभ्नीतः ।

तृप्नोति। तृप्नुत । सुरनदी । हरिनंदनः । श्रीनन्दीत्यादि । नरान् । माषान् । दोषान् ।

नृतेर्यङि ॥ १३७ ॥ नृतेर्यङि णो नास्ति। नरीनृत्यते । नर्नार्ति ।

स्तोः श्चुना श्चु ॥१३८॥ सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ भवतः । कश्शेते । जिनालयश्शोभते । तपश्चरति । धन्यश्चिनोति पुण्यं । मुनिश्छिनत्ति पापवध। त्वच्छय्या । तच्चरति ।तच्छयति । तज्जयति । तज्झकारः । तज्झकारेण । राज्ञः । याच्ञा ।

ष्टुना ष्टुः ॥ १३९ ॥ स्तोः सकारतवर्गयो षकारटवर्गाभ्यां योगे षकारटवर्गौ स्तः । कष्षष्ठिक । कष्टीक्ते । पुरुषष्टक्यति । पेष्टा । तट्टीक्ते । तट्टकारेण । तड्डीन । तड्ढौक्ते । भवाण्णकारीयति ।

टोर्नाम्नगरीनवते ॥ १४० ॥ पदांताट्टोः परेषां एषा तोष्टुर्भवति । षण्णां । षण्णगरी । षण्णवति । नियमार्थोऽयं योग पदांताट्टोरेषामेव दुर्नान्यस्य । षट्सय । षट्त्व । षट्ता । मधुलिट् मोदति सरकोतत्वामृतलिट् तरति दु रा।

न तोष्पि ॥१४१॥ षकारे परे तवर्गस्य नास्ति । तीर्थकृत्षोडशः । महान्षडः । पीति किं ? तट्टकार ।

शात् ॥१४२॥ शकारात्तो श्चुर्न स्यात् । अश्नाति । प्रश्न ।

यरो ङो वा ङे॥१४३॥ यरःपदांतस्य ङे परे ङो वा भवति । वाङ्मधुर । वाग्मधुर अम्नीति । अज्नीतिः । षण्मुखानि । षड्मुखानि तन्नयन । तद्नयनं । ककुम्मंडल । ककुब्मंडल । ङ इति किं ? गुरवाक्प्रमाण ।

स्ये ॥१४४॥ यरः ङसमकारादौ स्ये परे नित्य ङादेशो भवति।वाङ्मयामयन्मय ।तन्मात्र । रीस्योः ॥१४५॥ पदांतयो रीसो पूर्वस्य सासनो ङो भवति। नृँश्पाहि । पुँस्कोकिल। पुँस्कामा ।

खय् खय शरि॥१४६॥ खयः ख्यू वा स्यात् शरि परतः।स्षीर । क्षीर । अप्सरा। अप्सरा। खय इति किं‍भिमान्साधुःअरीति किं‍वाक् चरति।

शरि द्वे ॥१४७॥ शर परस्य खयः द्वे रूपे वा स्त । कच्छादयति । कच्छादयति । स्थाली । स्थाली ।

यणो मय ॥१४८॥ यणः परस्य मयो वा द्वे स्त । दीर्घः। दीर्घ ।वाल्मीकः,वाल्मीक । अथवा मय परस्य यणो द्वे स्त । दद्ध्य्यत्र । दद्ध्यत्र, दध्यत्र । मद्ध्वत्र । मध्वत्र । मद्ध्वत्र।

अचो होऽर्हच ॥१४९॥ अचः पराभ्यां रेफहकाराभ्यां परस्य रेफहकारावर्जितस्य वर्णस्य द्वे वा स्तः।आर्य्य । आर्य । वाह्य्य । वाह्य । अच इति किं‍ह्नुते । अर्हच इति किं ? अर्हः । श्रीह्द' । वीर ।

अयः ॥१५०॥ अदीमञ्चरादच परस्य द्वे वा स्तः । पथ्यदन । पत्थ्यदन । त्वर, त्त्वर । स्वम् , स्वम् । तत् । तत् । तद् । तद् । अय इति किं ? पात्र ।

न स्फेऽचि ॥ १५१ ॥ स्पमयोः आचि च परे अर्हचां द्वे रूपे न स्त । इद्रः।हल्न्नादधिमधु।

खर ॥१५२॥ शरोऽचि [illegible] न स्तः।आदर्शौ। वर्षं । तर्षं । अचीति किं ? यस्मर्यते ।

पुत्रस्यादिन्पुत्रादिन्याक्रोशे ॥ १५३ ॥ आदिनि पुत्रादिनि च परे पुत्रस्याक्रोशे द्वे न स्त आक्रोशविषये । पुत्रादिनी । पुत्रपुत्रादिनी स्वमसि पापे । आक्रोश इति कि । पुत्रादिनी। पुत्रपुत्रादिनी निशाचारी ।

झलो जश झशि॥१५४॥झलां जशोंऽताः स्यु

